# BIBLIOTHECA INDICA:

A

## COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE
ASIATIC SOCIETY OF BENGAL.
NEW SERIES, No. 1203.

# भाट्टदीपिका ।

# BHĀṬṬA DĪPIKĀ

A WORK
BELONGING TO THE PŪRVVA MĪMĀMSĀ SCHOOL OF
HINDU PHILOSOPHY

BY

KHAṆḌA DEVA




EDITED BY
MAHĀMAHOPĀDHYĀYA CHANDRA KĀNTA TARKĀLANKĀRA.
VOL. II, FASCICULUS I.

CALCUTTA:
PRINTED AT THE BAPTIST MISSION PRESS,
AND PUBLISHED BY THE
ASIATIC SOCIETY, 57, PARK STREET.
1909.

# LIST OF BOOKS FOR SALE

AT THE LIBRARY OF THE

# ASIATIC SOCIETY OF BENGAL,

**No. 57, PARK STREET, CALCUTTA,**

AND OBTAINABLE FROM

*The Society's Agents*—

MR. BERNARD QUARITCH, 11, *Grafton Street, New Bond Street, London, W.*,
AND MR. OTTO HARRASSOWITZ, BOOKSELLER, *Leipzig, Germany.*

*Complete copies of those works marked with an asterisk * cannot be supplied—some of the Fasciculi being out of stock.*

## BIBLIOTHECA INDICA.

### *Sanskrit Series.*

| | | |
|---|---|---|
| *Advaita Brahma Siddhi, Fasc. 2,4 @ /10/ each ... | Rs. 1 | 4 |
| Advaitachintā Kaustubha, Fasc. 1–3 @ /10/ each ... ... | 1 | 14 |
| *Agni Purāṇa, Fasc. 3–14 @ /10/ each ... ... | 7 | 8 |
| Aitarēya Brāhmaṇa, Vol. I, Fasc. 1-5; Vol. II, Fasc. 1–5; Vol. III, Fasc. 1-5, Vol. IV, Fasc. 1–8 @ /10/ each ... ... | 14 | 6 |
| Aitareyalocana ... ... ... ... ... | 2 | 0 |
| *Anu Bhāshya, Fasc. 2-5 @ /10/ each ... ... | 2 | 8 |
| Aphorisms of Sāṇḍilya (English), Fasc. 1 @ 1/- ... ... | 1 | 0 |
| Aṣṭasāhasrikā Prajñāpāramitā, Fasc. 1-6 @ /10/ each ... | 3 | 12 |
| *Atharvana Upanishad, Fasc. 3-5 @ /10/ each ... ... | 1 | 14 |
| Ātmatattvaviveka, Fasc. I ... ... ... ... | 0 | 10 |
| Açvavaidyaka, Fasc. 1–5 @ /10/ each ... ... ... | 3 | 2 |
| Avadāna Kalpalatā, (Sans. and Tibetan) Vol. I, Fasc. 1–6 Vol. II, Fasc. 1–5 @ 1/ each ... ... ... ... | 11 | 0 |
| A Lower Ladakhi version of Kesarsaga, Fasc. 1-3 @ 1/- each ... | 3 | 0 |
| Bālam Bhaṭṭī, Vol. I, Fasc. 1–2, Vol. II, Fasc. 1, @ /10/ each ... | 1 | 14 |
| Baudhāyana Srauta Sūtra, Fasc. 1–3; Vol. II, Fasc. 1 @ /10/ each ... | 2 | 8 |
| *Bhāmati, Fasc. 4-8 @ /10/ each ... ... ... | 3 | 2 |
| Bhāṭṭa Dīpikā, Vol. I, Fasc. 1-5 @ /10/ each ... ... | 3 | 2 |
| Brahma Sūtra, Fasc. 1 @ /10/ each ... ... ... | 0 | 10 |
| Bṛhaddevatā, Fasc. 1-4 @ /10/ each .. ... ... | 2 | 8 |
| Bṛhaddharma Purāṇa, Fasc. 1-6 @ /10/ each ... ... | 3 | 12 |
| Bodhicaryāvatāra of Çāntideva, Fasc. 1-5 @ /10/ each ... | 3 | 2 |
| Çatadūṣaṇī, Fasc. 1-2 @ /10/ each ... ... ... | 1 | 4 |
| Catalogue of Sanskrit Books and MSS., Fasc. 1-4 @ 2/ each ... | 8 | 0 |
| Çatapatha Brāhmaṇa, Vol. I, Fasc. 1-7; Vol. II, Fasc. 1-5 Vol. III, Fasc. 1-7; Vol. V, Fasc. 1–4 @ /10/ each ... ... | 14 | 6 |
| Ditto Vol. VI, Fasc. 1–2 @ 1/4/ each ... ... | 2 | 8 |
| Çatasāhasrikā-prajñāpāramitā, Part I, Fasc. 1–12 @ /10/ each ... | 7 | 8 |
| *Caturvarga Chintāmaṇi, Vol. II, Fasc. 1-25; Vol. III, Part I, Fasc. 1-18, Part II, Fasc. 1–10; Vol. IV, Fasc. 1–6 @ /10/ each ... | 36 | 14 |
| Ditto Vol. IV, Fasc. 7, @ 1/4/ each ... ... | 1 | 4 |
| Çlokavartika, (English), Fasc. 1–7 @ 1/4/ each ... ... | 8 | 12 |
| *Çrauta Sūtra of Āpastamba, Fasc. 9-17 @ /10/ each ... ... | 5 | 10 |
| Ditto Çāṅkhāyana, Vol I, Fasc. 1-7; Vol. II, Fasc. 1–4; Vol. III, Fasc. 1–4; Vol. 4, Fasc. 1 @ /10/ each ... ... | 10 | 0 |
| Çrī Bhāshyam, Fasc. 1–3 @ /10/ each ... ... ... | 1 | 14 |
| Dāna Kriyā Kaumudī, Fasc. 1–2 @ /10/ each ... ... ... | 1 | 4 |
| Gadadhara Paddhati Kālasāra, Vol. 1, Fasc. 1–7 @ /10/ each ... | 4 | 6 |
| Ditto Ācārasāra, Vol. II, Fasc. 1-3 @ /10/ each ... | 1 | 14 |
| *Gobhilīya Gṛhya Sūtra, Fasc. 4-12 @ /10/ each ... ... | 5 | 10 |
| Ditto Vol. II, Fasc. 1–2 @ 1/4 /each ... | 2 | 8 |
| Kāla Viveka, Fasc. 1-7 @ /10/ each ... ... ... | 4 | 6 |
| Kātantra, Fasc. 1-6 @ /12/ each ... .. ... | 4 | 8 |
| Kathā Sarit Sāgara, (English) Fasc. 1-14 @ 1/4/ each ... | 17 | 8 |
| Kūrma Purāṇa, Fasc. 3-9 @ /10/ each ... ... ... | 4 | 6 |
| Lalita-Vistara, (English) Fasc. 1-3 @ 1/- each ... ... | 3 | 0 |
| *Lalitavistara, Fasc. 3-6 @ /10/ each ... ... ... | 2 | 8 |
| Madana Pārijāta, Fasc 1-11 @ /10/ each ... ... ... | 6 | 14 |
| Mahā-bhāsya-pradīpodyota, Vol. I, Fasc. 1-9; Vol. II, Fasc. 1-12; Vol. III, Fasc. 1–8 @ /10/ each ... ... ... | 18 | 2 |
| Manuṭikā Saṅgraha, Fasc. 1-3 @ /10/ each ... ... | 1 | 14 |
| Mārkaṇḍeya Purāṇa, (English) Fasc. 1-9 @ 1/- each ... ... | 9 | 0 |

# भाट्टदीपिका ।

उत्तरषट्कम् ।

## सप्तमाध्यायस्य प्रथमः पादः ।

श्रुतिप्रमाणत्वात् ॥ एवं साधिकारे उपदेशेऽवगतेऽधुना तदधीनसिद्धिरतिदेशो निरूप्यते । अतिदेशोनाम, यः पदार्थो यादृशोपकारद्वारा यदङ्गत्वेनावधारितस्तस्य पदार्थस्य तत्सम्बन्धित्वेन रूपेण तादृशोपकारद्वारैवान्याङ्गताबोधकं प्रमाणम् । भवति हि प्रकृतिवद्विकृतिः कर्त्तव्येत्येवमादिवाक्यं प्रयाजादिपदार्थानां यादृशोपकारद्वारा आग्नेयाद्यङ्गत्वेनावधारितानामाग्नेयादिसम्बन्धित्वेन रूपेण तादृशोपकारद्वारा सौर्याद्यङ्गत्वबोधकम् । एतद्ब्राह्मणान्येव पञ्च हवींषीत्यपि च तदीयब्राह्मणवत्त्वज्ञापनद्वारा तदीयधर्माणां ब्राह्मणार्थभूतानामुक्तरीत्यैव विकृत्यङ्गत्वबोधकम् । मासमेकमग्निहोत्रमित्यग्निहोत्रनामापि तदीयधर्मवत्त्वलक्षणया गौण्यैव चोक्तविधाङ्गत्वबोधकम् । एवं स्वामापत्यतिदेशे आश्रयतो धर्मातिदेशेऽपि च लक्षणसमन्वयो बोध्यः ।

अत्र च दर्शपूर्णमासादीनां स्वर्गाद्यङ्गत्वेनावधारितानां तेनैव द्वारेण पापक्षयाद्यङ्गताबोधके यावज्जीवादिवाक्येऽतिप्रसङ्गवारणाय तत्सम्बन्धित्वरूपेणेति विशेषणम् । न हि दर्शादेः स्वर्गसम्बन्धित्वेन रूपेण पापक्षयार्थता । प्रमाणाभावात् । अपि तु दर्शत्वादिनैव ।

प्रकृते तु प्रयाजादीनामाग्नेयेतिकर्तव्यतात्वेनैवानुगमात्तदेव विकृति-सम्बन्धितावच्छेदकम्। पुरोडाशकपालादेस्तु पुरोडाशसम्बन्धित्वे-नावधारितस्य तेनैव रूपेण तुषोपवापाङ्गत्वात्तद्बोधकवाक्येऽति-प्रसङ्गवारणाय तादृशोपकारद्वारेति विशेषणम्। पुरोडाशे अधि-करणत्वेन तुषोपवापे करणत्वेनेति* तत्र द्वारभेदात्। केचित्तु सादृश्यकल्पितवाक्यत्वमतिदेशत्वमित्याहुः। तदतिदेशान्तरेष्वव्याप-कत्वादुपेक्षितम्।

अतिदेशनिरूपणोपोद्घातत्वेन चेदं निरूप्यते। किं प्रयाजा-दीनामुपदेशेन प्रकृतिमात्रार्थत्वमुत प्रकृतिविकृतिसाधारण्यमिति। साधारण्ये हि अतिदेशवैयर्थ्यमित्युपोद्घातता। तत्र यद्यपि प्रया-जादिषु आग्नेयादिमात्रविषयकप्रकरणादेर्विशेषविषयत्वं, तथापि तत्कल्प्यस्य वाक्यस्य प्रयाजादिभिर्यजेतेत्येतादृशस्यैव कल्पनं, न तु प्रयाजादिभिराग्नेयादिः कार्य इति। आग्नेयादिभेदेनानेकवाक्य-कल्पनापत्तेः। नापि दर्शपूर्णमासौ कार्याविति। तथात्वे तु उद्देश्य-वाचकस्य विधिवाचकस्य पदद्वयस्य च कल्पनापत्तेः। तत्र च यागत्वस्यैवोद्देश्यतावच्छेदकत्वात्सर्वार्थत्वसिद्धिः।

न हि तत्र प्रयाजादिविशिष्टयागकरणकप्रकृतभावनाविधिर्येन विशिष्टकथंविधिवत्प्रयाजादीनां प्रकृतभावनायामेवान्वयात्पाष्टिका-न्वयेऽपि प्रकृतयाग एवान्वय इत्याशङ्क्येत। भावनानां ह्युत्पत्ति-वाक्यादेव प्राप्तत्वात् विशिष्टविध्याशङ्का। उत्पत्तिवाक्येष्वेव तु

* पुरोडाशे स्वप्रयोजकीभूतरूपाधिकरणत्वेन तुषोपवापे स्वाप्रयो-जकीभूतोपवापकरणत्वेनेति,—इति सो॰ पुस्तके पाठः।

प्रयाजादिर्वैशिष्ट्यं भिन्नवाक्यत्वादेवासम्भवि। न हि तत्तद्वाक्यार्थ-बोधवेलायामनन्वितस्य प्रयाजादेर्वाक्यैकवाक्यतावेलायामन्वयसम्भवः। सकृदुच्चरितस्य विधेरेकरूपेणैकशाब्दबोधजनकत्वमिति नियमात्। अतो न प्रयाजादीनां प्रकृतिमात्रगामित्वम्।

अथवा दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति वाक्यं न स्वर्ग-सम्बन्धपरम्। सार्वकाम्यवाक्येनैव प्राप्तेः। अपि तु समिदादि-वाक्यैकवाक्यतया यागोद्देशेन प्रयाजादिविधिपरम्। अतश्च तत्र यागत्वस्यैवोद्देश्यतावच्छेदकत्वात्सर्वार्थता।

न च तत्र दर्शपूर्णमासपदं उद्देश्यविशेषणं उद्देश्यसमर्पकमेव वाऽस्त्विति युक्तम्। विशिष्टोद्देशे वाक्यभेदापत्तेः। धातोरुद्देश्य-परत्वे सम्भवति उपपदस्याऽन्याय्यत्वाच्च। अतश्च तत्रत्यदर्शपूर्णमासपदं इष्ट्वा कालपरमेव सत्सर्वयागेषु य इष्ट्वेति वाक्यप्राप्तकालानुवाद-कम्। अधिकरणस्यापि करणत्वाच्च तृतीया। तथा स्वर्गकामपदं चावयुत्यानुवादः। सर्वथा सर्वधर्माणां सर्वफलवदर्थत्वमुपदेशेनैवेति न क्वचिदतिदेशः। एवं च समानमितरत् श्येनेनेत्याद्यनुवाद एव। अग्निहोत्रमित्यादि नामापि डित्थो देवदत्त इतिवत्सिद्धवस्तुत्वं तत्प्रख्यन्यायमेव वाऽऽदायानुवादकमिति प्राप्ते।

यद्यपि यागानुवादेन धर्मविधिस्तथापि अनुवादस्य सति सम्भवे सन्निहितगामित्वनियमाद्व्रीहिभिर्यजेतेतिवत्प्रकृतिमात्रगामि-त्वम्। विशेषतश्च नवमाद्यन्यायेन यागस्वरूपे आनर्थक्यादपूर्व-साधनत्वलक्षणार्थमपि प्रकरणानुप्रवेशः।

वस्तुतस्तूत्पत्तिवाक्येष्वाकाङ्क्षावत्त्वेनेष्टसामान्यस्य भाव्यत्वकल्पन-

वदितिकर्तव्यतासामान्यस्यापीत्यमिति पदकल्पनयाऽन्वयस्वीकारा-त्स्वर्गादिवाक्यवच्च प्रयाजादिवाक्यानां विशेषणसमर्पकतया तद्वदेव वाक्यैकवाक्यतोपपत्तेरंशत्रयविशिष्टविजातीयभावनाया एव विधाना-त्पार्ष्टिकान्वये च प्रकृत एव तद्भावनाकरणीभूते यागेऽनुग्राहकत्व-कल्पनाच्च सर्वार्थमौपदेशिकम्। उत्पत्तिवाक्ये इतिकर्तव्यतासामा-न्यान्वयाच्च न सकृदुच्चरितस्य विरूपानेकबोधजनकता। वाक्यैक-वाक्यताजन्यबोधस्तु न श्रुतशब्दबोध इति न सरूपनानाबोधजन-कत्वमप्येकस्य। अतः पारिप्लवकत्वाभावाद्धर्मकाणामैन्द्राग्नादीनां धर्माकाङ्क्षायामतिदेशसिद्धिः।

यत्तु मूले अतिदेशसिद्ध्यर्थं यजिप्रयुक्तत्वं वा धर्माणां अपूर्व-प्रयुक्तत्वं वेति चिन्तान्तरं कृतं, तद्यजिप्रयुक्तत्वेऽपि प्रकृतयजिप्रयुक्त-त्वोपपत्तेरितरथाऽपूर्वप्रयुक्तत्वेऽपि तदनापत्तेर्नावशिकेन पौनरुक्त्यापत्ते-श्चोपेक्षितम्। स चातिदेशो द्विविधो वचनातिदेशो नामातिदेशश्चेति। आद्योऽपि प्रत्यक्षवचनातिदेशोऽनुमितवचनातिदेशश्चेति। अनुमित-वचनातिदेशोऽपि त्रिविधः। सादृश्यकल्पितवचनातिदेशः। स्थाना-पत्तिकल्पितवचनातिदेशः। आश्रयोपस्थितिकल्पितवचनातिदेश-श्चेति ॥ ७ ॥ १ ॥ १ ॥ ० ॥

समान ॥ तत्र प्रत्यक्षवचनातिदेशो निरूप्यते। इषुर्नामैकाहो-ज्योतिष्टोमविकारः। तत्र प्राकृते साम्नि वषट्कारनिधनमाम्नातम्। प्राकृतत्रिवृतौ च इडाकारत्वं, स्तोत्रे प्राकृते यज्ञायज्ञीयं साम। ततः समानमितरच्छ्येनेनेति श्रुतम्। तत्किमनुवाद उतातिदेशविधि-रिति चिन्तायाम्। इतरशब्दस्य सन्निहितवचनत्वेन लोके प्रसिद्धत्वा-

नास्य असन्निहितश्येनवैशेषिकधर्मवाचित्वम्। तेषामसन्निहितत्वात्। अपि तु ये ज्योतिष्टोमातिदेशेन सन्निहितास्तत्परत्वमेव। तेषां च श्येनेऽप्यतिदेशप्राप्तत्वेन श्येनसादृश्योपपत्तेरनुवाद एवायमिति न श्येनवैशेषिकाणां वचनातिदेश इति प्राप्ते।

इतरशब्दस्य सन्निहितवाचित्ववत्पूर्वोक्तेतरतत्सदृशवाचित्वमपि लोकसिद्धम्। चैत्रमैत्रयोः कम्बलकौशेये देये इतरद्विष्णुमित्रायेत्यत्र सन्निहितपूर्वोक्तेतरतत्सदृशवस्त्रादेरेव प्रतीतेः। अतश्च वार्त्तिककारीया पूर्वोक्तसादृश्यस्य अवाच्यत्वोक्तिरुपेक्षणीयैव। ततश्च यत्सन्निहितं प्राकृतं, न तत्पूर्वोक्तसदृशम्। अप्राकृतानां सप्तदशादीनां पूर्वोक्तत्वात्। यच्च सदृशं श्येनवैशेषिकं अप्राकृतत्वसाधर्म्यात् न तत्सन्निहितम्। ततश्चावश्यावच्छेद्ये अन्यतरस्मिन्वचनार्थवत्त्वाय सन्निधिं हित्वा सादृश्यपरिग्रहेण श्येनवैशेषिकाणामेव इतरशब्देन ग्रहणम्। न ह्यन्यथा विध्यन्तराशेषभूतस्यानुवादस्यार्थवत्त्वं सम्भवति।

ततश्च श्येनसादृश्यवद्यत्पूर्वोक्तसदृशं पूर्व्वोक्तभिन्नं, तद्विधौ कुर्यादितिवाक्यार्थः। श्येनसादृश्यं च श्येननिष्ठाङ्गवृत्तिधर्म्मसमानजातीयधर्म्मवत्त्वम्। भवति हि श्येननिष्ठाङ्गानां कण्टकवितोदनादीनां ये धर्माः कण्टकवितोदनत्वादयस्तत्समानजातीयास्त एव तद्वत्त्वं कण्टकवितोदनादौ। अतएव श्येनपदं श्येनाङ्गपरम्। न तु यथाश्रुतम्। न हि श्येनप्रतियोगिकं सादृश्यं कण्टकवितोदनादौ सम्भवति। अतश्च फलतः श्येनधर्मा एव पूर्वोक्तसदृशाः पूर्वोक्तभिन्नाश्च कार्या इति पर्यवसितोऽर्थः। पूर्वोक्तसादृश्यं चाप्राकृतत्वेन प्राकृताङ्गमुद्दिश्यविहितत्वेन वा। तेन श्येने ये अपूर्वाधर्माः कण्टक-

वितोद्गात्रादयस्तु इहाप्यतिदिश्यन्ते। ये वा श्येने प्राकृताङ्गानुवादेन विहिता लोहितोष्णीषादयस्त एवातिदिश्यन्ते।

यत्त्वस्मिन् पक्षे नैतेषामेव नियम इति तन्त्ररत्नोक्तं, तद्वाक्यान्तरसादृश्यत्यागे प्रमाणाभावादुपेक्षितम्। अस्मिंश्च पक्षे इषुयागोद्देशेनानेकपदार्थविधानायोगात्पदद्वयेन लक्षणया श्येनीयप्राकृताङ्गसम्बन्धिविकारमात्रस्येषूद्देशेन विधानम्। यद्वा इतरपदे लक्षितत्यागे प्रमाणाभावात्प्राकृताङ्गानामपि चोद्देश्यतया पूर्वमुक्तन्यायात्पूर्वोक्तप्राकृताङ्गभिन्नतत्सदृशप्राकृताङ्गान्तराणामेवेतरपदेन* ग्रहणम्। तेषामतिदेशेन सन्निहितत्वात्। तादृशप्राकृताङ्गोद्देशेनैव च श्येनसादृश्यविधिः।

सादृश्यं चास्मिन् पक्षे श्येनीयप्राकृताङ्गवृत्तिधर्मसमानधर्मवत्त्वम्। स च धर्मः श्येने प्राकृताङ्गानुवादेन विहितो विकारो लोहितोष्णीषादिः। अतएव सादृश्यं न श्येननिरूपितम्। अपि तु श्येनीयप्राकृताङ्गनिरूपितमेव। उपमानतावच्छेदकसम्बन्धेन श्येनवृत्तिधर्मस्य लोहितोष्णीषादेस्तेनैव सम्बन्धेन प्राकृताङ्गेष्वभावात्। उपमानतावच्छेदकसम्बन्धेनोपमेयवृत्तित्वे एवोपमानियमात्। अतएवास्मिन् पक्षे श्येनपदं श्येनीयप्राकृताङ्गपरम्। ततश्च फलतस्तादृशधर्मा एव इष्वपूर्वसाधनीभूततादृशप्राकृताङ्गोद्देशेन विधीयन्ते।

अतएव विधेयसामर्थ्यानुरोधेन श्येने यो विकारो यत्प्राकृताङ्गे विहितस्तत्प्राकृताङ्ग एव सोऽत्र विधीयते। इतरथाऽप्राकृतकार्य्य-

---

* प्राकृताङ्गान्तराणामितरपदेन,—इति ख्या० पुस्तके पाठः।

कारितापत्तेः । अतोऽस्मिन्नपि पक्षे विवक्षितगत्या इषुमत्त्विले-
नैव तादृशश्येनीयविकारविधिः । न चैवमस्यातिदेशस्य कल्पितत्वा-
भावादानुमानिकवचनातिदेशापेक्षया प्राबल्येऽपि श्येनेन समान-
मिति पदद्वये तादृशविकारलक्षणाया आवश्यकत्वान्नामातिदेशा-
पेक्षया प्राबल्ये प्रमाणाभावः । नामातिदेशस्थलेऽग्निहोत्रपदेनान-
भिहितानामेव धर्माणां लक्षणा, वचनातिदेशे तु समानपदे-
नोक्तानामेव तादृशधर्माणां विधेयतावच्छेदकीभूतश्येनीयप्राकृताङ्ग-
वृत्तिविकारत्वावच्छिन्नत्वसिद्ध्यर्थं लक्षणेति तस्य तदपेक्षया प्राब-
ल्यात् ॥ ७ ॥ १ ॥ २ ॥

पञ्चसञ्चरेषु ॥ चातुर्मास्येषु वैश्वदेवे पर्वणि आद्यानि पञ्च
हवींषि सधर्मकाणि विधाय वरुणप्रघासेषु विहितानि । तेषां
च विभिन्नमनाविरहेण अभ्यासात्कर्मान्तरत्वम् । वरुणप्रघासस्थ
हविःसन्निधौ चैतद्ब्राह्मणान्येव पञ्च हवींषि यद्ब्राह्मणानीतराणि
इति श्रुतम् । इतराणि वैश्वदेविकानीत्यर्थः । अत्र च ब्राह्मण-
स्यैवातिदेशः ।

यद्यपि चान्यत्रोपकारस्य तत्पृष्ठभावेन पदार्थानामेव चाति-
देशो न तु पदार्थबोधकशास्त्राणां प्रयोजनाभावात्तथापीह लक्ष-
णायां प्रमाणाभावाच्छास्त्रस्यैवातिदेशः । न च शास्त्रस्यैवातिदेशे
तद्बोधितपदार्थानां प्राकृतोपकाराभावे उपकारान्तरकल्पनापत्ते-
रुक्तबाधानुपपत्तिः । शास्त्रस्यापि विजातीयोपकारजनकविजातीय-
पदार्थप्रतिपादकतया निरूपितरूपस्यैवातिदेशादुपकारान्तरकल्प-
नानुपपत्त्योक्तबाधोपपत्तेः । वस्तुतस्तु ब्राह्मणपदेनार्थविधायकवाक्य-

स्तोकत्वाल्लाघवा*दपेक्षितत्वाच्चाचार्यस्यैवातिदेशः । अतएवातिदेश-वचनमपि नावश्यकम् ।

तदिह हविर्विधायकवाक्यस्यैवेह प्राशस्त्यपदेनोक्तत्वात्तस्यार्थवादक-स्यैव विधायकत्वादाकाङ्क्षाऽभावेन प्रधानातिदेशाभावेऽपि स्तुति-मात्रस्यातिदेशो न त्वङ्गानाम् । तेषां स्वस्वाङ्गविधिविधेयत्वेन हवि-र्विधिविधेयत्वाभावात् । अतएव वरुणप्रघासेषु अग्निं मन्थन्ति प्रसुवो भवन्ति, इत्यादिविधयोऽप्युपपद्यन्ते । अन्यथाऽतिदेशादेव प्राप्तत्वेन वैयर्थ्यमिति प्राप्ते ।

अङ्गविधीनामप्येतद्धविःसम्बन्ध्यङ्गविधायकत्वेनैतद्वाक्यत्वोपपत्तेः प्राशस्त्यस्य महाविषयत्वसिद्ध्यर्थं अङ्गानां स्तुतेश्चातिदेशः । न चापेक्षाक्रमेणैव सर्वत्रान्वयादर्थभावनाया इतिकर्तव्यतापेक्षाया-मङ्गातिदेशेऽवगते पश्चात्तद्विशिष्टार्थभावनाया विधिसम्बन्धावग-मोत्तरं तस्य स्तुत्यपेक्षायां स्तुत्यतिदेश इति विरम्य व्यापारत्वा-पत्तिः । दृष्टसामान्यवदितिकर्तव्यतासामान्याक्षेपादेव तद्विशिष्ट-भावनाविधिसिद्धेः स्तुत्यपेक्षावेलायामेवातिदेशप्रवृत्तेः । अतएवानु-मानिकवचनाद्यतिदेशेऽपि अर्थवादातिदेशसिद्धिः । या त्वेवं सति विश्वजिति आतिदेशिकार्थवादिकफलकल्पनाप्रसक्तिः, सा कौस्तुभे एव निरस्ता ।

वस्तुतस्तु वाचनिकातिदेशस्य भिन्नवाक्यविधया प्रमाणत्वादुत्प-त्तिवाक्ये इतिकर्तव्यतासामान्याक्षेप आवश्यक एव । न च प्राश-

---

* लाघवात्,—इति आ॰ पुस्तके नास्ति ।

स्यातिदेशे तस्य निराकाङ्क्षत्वे प्रमाणाभावात्* इतिदेशलक्षणस्याव्याप्तिः । लक्षणेऽङ्गत्वपदेन भावनेतिकर्तव्यतात्वेनान्वितत्वस्य विवक्षितत्वात् । अतस्त्वार्थभावनेतिकर्तव्यतात्वस्य तत्करणोपकारजनकत्वरूपस्य शाब्द-भावनेतिकर्तव्यतात्वस्य च यच्चिद्रूपा† तत्करणोपकारजनकज्ञानविषय-त्वात्तस्य द्विविधस्य सङ्ग्रहः । अन्वितपदोपादानाच्चार्थिकप्रासङ्गिको-पकारजनकेऽपि नातिदेशः । तस्य प्रकृतभावनानन्वितत्वात् । तस्मादुभयातिदेशः । अग्निमन्थनादीनां तु दक्षिणविहारे प्राप्त्य-भावादुक्तवदर्थं पुनर्विधिः । अत एव नवप्रयाजत्वादेरतिदेशाद्वाजिनो-यजति आहुतीनां सम्पत्त्यै त्रिंशत्त्वायेति लिङ्गमप्युपपद्यते । इत-रथा त्रिंशत्त्वानुपपत्तेरिति सूत्रकारभाष्यकारौ ।

वस्तुतस्तु मारुतीयागस्यापि वैश्वदेविकामिक्षायागविकारत्वा-न्नवप्रयाजत्वादिवदेवाग्निमन्थनादीनामपि प्राप्तिसम्भवाच्चायं वैयर्थ्य-परिहारः । आमिक्षैककपालानुरोधेनैव च नवप्रयाजत्वादिसिद्धे-स्त्रिंशत्त्वस्याप्युपपत्तिः । न च भूयसा‡ दर्शपूर्णमासविकारत्वात्तदनु-रोधेन पञ्चप्रयाजत्वम् । पशुपुरोडाशवदावृत्तावपि पञ्चत्वाविरो-धात् । अतो भाष्यमनादृत्य सूत्रमेवं व्याख्येयम् । अग्निमन्थ-नादिवाक्यानामौचित्येनातिदेशविधिस्तुत्यर्थत्वान्नेतरार्थत्वादिति सूत्रं विधायकत्वातिरिक्तबाधकत्वरूपप्रयोजनकथनार्थम् । तदेव चाति-

---

* निराकाङ्क्षत्वाभावेन,—इति सो॰ पुस्तके पाठः ।

† यच्चिद्रूप,—इति नास्ति सो॰ पुस्तके ।

‡ भूयसां,—इति व्या॰ पुस्तके पाठः ।

देशवाक्यस्याङ्गविधिपरत्वे लिङ्गमिति लिङ्गदर्शनसूत्रस्यार्थः। अतः सिद्धं अङ्गानामप्यतिदेश इति। न चामिक्षैककपालयागानुरोधेनैव वैश्वदेविकधर्मप्राप्तिसिद्धेरतिदेशविध्यानर्थक्यम्। यत्र धाय्याविराजादिविरुद्धधर्मविषये मुख्यत्वभूयस्त्वाभ्यां दार्शिकधर्मप्रसक्तिस्तद्विषये वैश्वदेविकधर्मप्राप्त्यर्थत्वेन सार्थक्यात्॥ ७॥ १॥ ३॥

एककपाल॥ एवं साकमेधे श्रुतयोरैन्द्राग्नैककपालयोरपि एतद्ब्राह्मण ऐन्द्राग्नो यद्ब्राह्मण इतरः, एतद्ब्राह्मण एककपालो यद्ब्राह्मण इतर इति वाक्याभ्यां सार्थवादकसाङ्गविधिकाण्डस्यातिदेश इत्युत्तरविवक्षया स्मार्यते॥ ७॥ १॥ ४॥

एककपालानां॥ एककपालस्य प्रकृतिभूतएककपालो वारुणप्रघासिक एव। न तु धर्मभूयस्त्वेऽपि वैश्वदेविकः। वक्ष्यमाणात्सर्वैककपालेषु चोदनालिङ्गातिदेशादेव वैश्वदेविकधर्मप्राप्तिसिद्धेः। अनन्यलभ्यकतिपयधर्मप्राप्त्यर्थं वारुणप्रघासिक एव। एवं चैन्द्राग्नप्रायपाठोऽप्युपपद्यते। तत्र हि न दार्शिकैन्द्राग्नातिदेशविधिः। चोदनालिङ्गातिदेशादेव सिद्धेः। नाप्यैन्द्राग्नान्तराणाम्। अनुपस्थितत्वात्। अतएव चातुर्मास्यप्रकरणस्थत्वेनोपस्थितत्वाद्वैश्वदेवे चैन्द्राग्नाभावाद्वारुणप्रघासिकस्यैव। अतस्तत्प्रायपाठादपि साकमेधैककपालस्य वारुणप्रघासिकैककपालप्रकृतित्वम्। धर्माश्च हिरण्मयः स्रुचो भवन्तीत्यादयः सामान्यविहिता इति भाष्यकारः।

वस्तुतस्तु साकमेधस्थपञ्चसञ्चरेषु अतिदेशविधिरस्ति न वा? अन्त्ये दर्शपूर्णमासविकारत्वापत्तेर्भूयोऽनुग्रहाय न हिरण्मयत्वादिप्रसक्तिः। आद्येऽपि एतदधिकरणन्यायस्यान्यलभ्यत्वस्याभावाद्धर्मभूय-

स्थाभाव वैश्वदेविकपञ्चसञ्चराणामेव धर्मातिदेशात्तथैव वारुण-प्रघासिकहिरण्मयत्वाद्यप्राप्तिः।

वस्तुतस्तु वाजिनकाधाराद्यत्र वरुणप्रघासेषु कुम्भन्तरोत्पत्ति-प्रसक्ति*स्तत्रैव हिरण्मयत्वश्मश्मयत्वादेर्विध्यौचित्येन दक्षिणविहार-एव तन्निवेशादैन्द्राग्नैककपालयोरपि न हिरण्मयत्वाद्यतिदेशः। अस्तु वा सः, तथापि यदैन्द्राग्नाद्यतिदेशविधिवैयर्थ्यभियैव भूयस्त्वा-मनुपत्तमनङ्गीकृत्य हिरण्मयत्वाद्यनुष्ठानमित्युच्येत, तत्र ऐन्द्राग्नैक-कपालयोर्मध्येऽन्यतरातिदेशेनैव तत्प्राप्तिसिद्धेरितरानर्थक्यम्। अतो-ऽवश्यं तत्तद्विशेषविहितधर्मप्राप्तिसिद्ध्यर्थमेवेदमतिदेशद्वयम्। विशेष-विहितास्त्वैन्द्राग्ने याज्यादयः। एककपालेऽपि केचित्काखान्तरेष्वनु-सन्धेया इति ध्येयम्॥ ७॥ १॥ ५॥

इति श्रीखण्डदेवकृतौ भाट्टदीपिकायां

सप्तमाध्यायस्य प्रथमः पादः॥

---

* वाजिनकसमाधाराद् यत्र सामान्यविहिता कुम्भन्तरोत्पत्तिप्रसक्तिः,—इति सो॰ पुस्तके पाठः।

# अथ सप्तमाध्यायस्य द्वितीयः पादः।

साम्नः॥ प्रकृतौ ज्योतिष्टोमे अभिवत्यामुत्पन्नं रथन्तरं विष्टुति-विशेषे अविवाक्यादौ कवतीषु कर्तव्यत्वेन श्रूयते, कवतीषु रथन्तरं गायतीत्यादिना। तथा यद्योन्यां गायति तदुत्तरयोर्गायतीत्यादि च श्रुतम्। तत्र रथन्तरादिशब्दानाङ्गीतिविशेषविशिष्टायां ऋचि-प्रयोगादिशिष्टवाचित्वे प्राप्ते। आकृत्यधिकरणन्यायेनैव गीति-विशेषमात्रं विजातीयगीतित्वमात्रं वा वाच्यम्। एवं सामशब्द-स्यापि गीतिमात्रं गीतित्वमात्रं वा वाच्यम्। न तु गीतिविशि-ष्टा वा ऋक्। तस्या व्यक्तिन्यायेनारुणपद इव सति मुख्यार्थबाधे लक्षणया बोधोपपत्तेः।

आकृत्यधिकरणेव तु प्रयोजनकथनार्थानि सूत्राणि। यदि हि ऋग्वाचित्वं भवेत्तदा ऋचि ऋच्यतिदेशासम्भवात्* कवतीशब्दः कार्यलक्षणार्थः। तत्कार्यमर्थप्रकाशनं लक्षणादिना अभिवत्या कुर्या-दितिकवतीकार्ये ऋगन्तरस्यातिदेशः। देशलक्षणार्थो वा। कवती-देशे अभिवतीं पठेदिति। अथवान्यं रथन्तरपदं वा तद्धर्मलक्षणार्थं तद्धर्मातिदेशार्थं कवतीषु सञ्चीलनादीन् रथन्तरधर्मान् कुर्यादि-त्यर्थः। अन्ये तु भाष्यस्थाः पक्षा असम्भवदुक्तिकत्वान्न लिखिताः।

* इत्थमेव पाठः सर्वत्र। ऋचि ऋचोऽतिदेशासम्भवात्,—इति तु भवितुमुचितं प्रतिभाति।

सिद्धान्ते तु लक्षणायां प्रमाणाभावादृच एव बोधस्यैवाभावेन गीतिमात्रस्यैव कवतीष्वतिदेश इति । प्रयोजनम्, प्रवर्ग्यादात्यधि-करणसिद्धस्यैव गीतिवाचित्वस्योपष्टम्भकानि कानिचिल्लिङ्गदर्शन-सूत्राणि इति द्रष्टव्यम् ।

न च यद्योन्यां गायतीत्यादौ योनिसम्बन्धित्वेन रूपेण विधेय-त्वादतिदेशलक्षणोपपत्तावपि कवतीषु रथन्तरं गायतीत्यादौ रथ-न्तरत्वस्यैव विधेयतावच्छेदकत्वादतिदेशत्वानुपपत्तिरिति वाच्यम् । तत्रापि धर्मग्राहकक्लृप्तोपकारलाभार्थमभिवतीसम्बन्धित्वस्यैव विधेय-तावच्छेदकत्वात् । वस्तुतस्तु अश्वमेधीये आज्यभागविधेरतिदेशत्वा-भाववदस्याप्यतिदेशत्वाभावे न काचित्क्षतिः । लाघवेनाभिवतीषु येन रूपेणोपकारकत्वं तेनैव रूपेण कवतीषु उपकारकत्वस्वीकारेणो-क्तोपपत्तेः ॥ ७ ॥ २ ॥ १ ॥

इति श्रीखण्डदेवकृतौ भाट्टदीपिकायां
सप्तमाध्यायस्य द्वितीयः पादः ॥

---

# अथ सप्तमाध्यायस्य तृतीयः पादः ।



उक्तम् ॥ इदानीं नामातिदेशः प्रस्तूयते । मासमग्निहोत्रं जुहोतीत्यादौ नैयमिकाग्निहोत्रवाचिनो नाम्नो न तावत्कर्मान्तरवाचकत्वम् । अनेकशक्तिकल्पनापत्तेः । दर्विहोमत्वेन चोदनालिङ्गातिदेशाभावान्नामातिदेशाभावेऽग्निदेवताकत्वे प्रमाणाभावेन तत्प्रख्यन्यायानुपपत्तेश्च ।

न च यदाहवनीये जुहोतीत्यनेनाग्नेः प्राप्तत्वादग्न्यधिकरणकत्वेन योगोपपत्तिः । तथातिप्रसक्तत्वेन रूढ्यादिकल्पने पुनर्गौरवतादवस्थ्यात् । अन्तोदात्तस्वरस्य सप्तमीबहुव्रीहावनुपपत्तेश्च । सप्तमीतत्पुरुषस्य शौण्डादिगणे पाठाभावेनानुपपत्तेश्च । यदि तु नित्याग्निहोत्रे इवाग्नेर्होत्रं होम इति व्युत्पत्त्या अधिकरणत्वं षष्ठ्यर्थमङ्गीकृत्य मासाग्निहोत्रेऽपि योग आश्रीयेत, तथापि प्रचुरप्रयोगादग्निहोत्रपदस्य निरूढलक्षणया नित्याग्निहोत्रे प्रयोगात्तत्रास्य शक्तितुल्यत्वेन मासाग्निहोत्रे तदसम्भवाद्गौणत्वमावश्यकम् । अनयैव च दिशा मासं दर्शपूर्णमासाभ्यामित्यादौ गौणत्वोपपादनं द्रष्टव्यम् ।

अन्यथा य इष्ट्वेत्यादिना पौर्णमासीकालकत्वप्राप्तेरुभयत्र साधारणत्वाविशेषात् । दर्शादिकालाप्राप्तावपि वा एकत्र मुख्यत्वापरत्र गौणत्वनियमात् । प्रसिद्धदर्शादौ निरूढलक्षणाया आवश्यके च सौमिकचोदनालिङ्गातिदेशेनैव रूपलाभोपपत्तौ तदभावस्यान्यथा-

साधकत्वाच्च। एतेन गौणत्वाभावेऽपि एकनामकत्वसादृश्येन चोदनालिङ्गातिदेशादेवाग्निहोत्रधर्मलाभ इत्यपास्तम्। उभयत्र नि-रूढलक्षणायां प्रमाणाभावेनैकनामकत्वासिद्धेः।

न च तथापि देवताकालादिरूपगुणविधायकत्वेनैवोपपत्तौ गौणत्वे प्रमाणाभावः। तत्प्रख्याधिकरणोक्तकौस्तुभरीत्या समासासम्भ-वेन देवताविध्यनुपपत्तेः। कालस्य प्राप्तत्वादिना विध्यनुपपत्तेश्च। अतश्चाग्निहोत्रादिशब्दाः कर्मान्तरे गौणाः। तत्र वत्यर्थरूपधर्म-लक्षणापूर्वकं कर्मान्तरे गौणीति प्राञ्चः। तत्सिद्धिसूत्रोक्तकौस्तुभ-रीत्या तु गौणीज्ञानकार्यतावच्छेदकमेवाग्निहोत्रीयधर्मविशिष्टकर्मा-न्तरशाब्दबोधत्वमित्यपि शक्यं वक्तुम्। तत्र च सिंहो देवदत्त इतिवत्प्रमाणान्तरसिद्धसादृश्येन गौणत्वासम्भवेऽपि अस्मिन्नेव वाक्ये तदीयधर्मविशिष्टकर्मान्तरविधानेन साध्यसादृश्येन गौणत्वोपपत्ति-रिति सिद्धो नामातिदेशः। पदार्थातिदेशेऽपि च निरूपितरूप-स्यैवातिदेशाद्दूषणाभावसिद्धिः॥ ७॥ ३॥ १.॥

अपि वा॥ द्वादशाहे प्रथममहः प्रायणीयं सधर्मकं विधाय गवामयने वैश्वानरो ज्योतिष्टोमः प्रायणीयमहर्भवतीति श्रुतम्। तदेते द्वे कर्मणी विनिगमनाविरहादिति निर्णीतं प्रकरणान्त-राधिकरणे कौस्तुभे। तदत्र गावामयनिकप्रायणीयपदं पूर्वन्यायेनैव द्वादशाहिकप्रायणीयधर्मातिदेशार्थम्। न च चोदनालिङ्गाति-देशादेव तत्प्राप्तिसिद्धेर्नामातिदेशवैयर्थ्यम्। गणत्वसाम्येऽपि द्वादशा-हान्तर्गतदशाहस्यैव चोदनालिङ्गातिदेशेन धर्मप्राप्तेर्वक्ष्यमाणत्वा-दिति प्राप्ते।

तेनैव प्रथममयन्त्यनेनेति व्युत्पत्त्या प्राथम्यगुणयोगेन द्वादशाहिकेऽहनि प्रवृत्तिस्तेनैव गावामयनिकेऽपीति प्राथम्ययोगेनोभयत्रापि मुख्यतयैव प्रवृत्तौ गौणत्वे प्रमाणाभावः। न चात्र पूर्ववद्द्वादशाहिके प्रचुरतरः प्रयोगो येन तत्रैव रूढिर्निरूढलक्षणा वा अन्यत्र तु गौणीत्याशङ्क्येत। अतोऽत्र न नामातिदेशः प्रायणीयपदे। वैश्वानरपदं तु प्रकरणे वैश्वानरग्रहविधानात्तत्प्रख्यन्यायेन नामधेयमपि वैश्वानरसंज्ञकस्य सधर्मकस्य कर्मान्तरस्याप्रसिद्धेर्नैवातिदेशकम्। ज्योतिष्टोमपदं तु ज्योतिष्टोमधर्मप्रतिप्रसवार्थं सम्भवत्येवातिदेशकम्।

तेनैव तत्तुल्यायां* विरोधे न गणत्वसामान्याद्द्वादशाहिकद्वितीयाहर्धर्माः। अपि तु ज्यौतिष्टोमिकाः। साधारणात्तु भूयोऽनुग्रहाच्च द्वादशाहिका एव। इदं चाधिकरणं गावामयनिके प्रथमेऽहनि प्रायणीयपदस्य भाष्यकारादिभिर्लेखनादवगन्तव्यम्। यदा तु छन्दोगसूत्रानुसारेण प्रायणीयपदस्य गावामयनिके द्वितीये चतुर्विंशेऽहनि प्रयोगस्तदाऽतिदेशो भवत्येवेति ध्येयम्॥ ७॥ ३॥ २।

विश्वजितीति॥ विश्वजित्सर्वपृष्ठोऽतिरात्र इत्यत्र सर्वपृष्ठशब्दोऽनुवादोऽथवा षाड्हिकानां रथन्तरबृहद्वैरूपवैराजशाक्वररैवतानां साम्नां विधिरिति चिन्तायाम्। पृष्ठशब्दस्य स्तोत्रवाचित्वात्सामपरत्वे विधौ लक्षणापत्तेर्ज्योतिष्टोमे च पृष्ठैः स्तुवत इत्यनेन षण्णां पृष्ठस्तोत्राणां विधानस्य चित्राधिकरणे कौस्तुभे व्युत्पादितत्वाद्दिशातिदेशेन बहुत्वप्राप्त्युपपत्तेर्विशिष्टविधिगौरवाच्चानुवाद एवायमिति प्राप्ते।

---

* तेनैतत्तुल्यायां,—इति सो॰ पुस्तके पाठः।

अनुवादत्वे वैयर्थ्यापत्तेः। पवमाने रथन्तरमार्भवे बृहदग्निष्टोमसामान्यन्तराणि वैरूपं होतुः पृष्ठे वैराजं मैत्रावरुणस्य रैवतं ब्राह्मणाच्छंसिनः आकरमच्छावाकस्येति षड्विधेयसामविधिरूपतात्पर्यग्राहकत्वेन सर्वपृष्ठशब्दस्य निरूढलक्षणया षाड्हिकरथन्तरादिसामपरत्वावगतेस्तेषामेव विधिः। निरूपितस्य पृष्ठशब्दस्य निरूढलक्षणाव्याख्यानार्थोऽर्थवादः कौस्तुभे। अतएव सर्वपदेनातिदेशप्राप्तयोर्वैकल्पिकयोर्बृहद्रथन्तरयोः समुच्चयविधिरित्यप्यपास्तम्। होतुः पृष्ठे वैरूपस्योपदेशिकत्वेन तयोर्बाधात्। सर्वशब्दस्य बहुत्वापेक्षत्वेन द्वयोरसम्भवाच्च। अतः षाड्हिकानां विधिः। यन्मते तु एकमेव प्रकृतौ पृष्ठस्तोत्रं पृष्ठद्वयं वा, तन्मते अप्राप्तत्वादपि नानुवादः।

अयं च यद्यपि न नामातिदेशः, सर्वपृष्ठशब्दस्य षड्हवाचित्वाभावात् विश्वजिति बहुव्रीहिणैव प्रवृत्तेर्गौणत्वाभावाच्च। न चायं वचनातिदेशः। अश्वमेधीये आज्यभागौ यजतीतिवदेव षड्हीयत्वस्य विधेयतानवच्छेदकत्वात्। तथापि उपदेश एवायं रथन्तरादीनाम्। अतएव न षड्हधर्मान्तराणामिह करणम्। अन्यकर्मांगत्वेनैतद्वाक्यप्रवृत्तेः पूर्वावगमसाम्यात्। कर्मसमानाधिकरणपदसम्बन्धसाम्याच्च। सप्तमे नामातिदेशप्रस्तावे समारम्भः। प्रधानं नीयमानमिति न्यायेनैव च रथन्तरादिधर्माणां आवश्यकस्तोभादीनां च पवमानादिकार्यान्तरोपयोगिरथन्तरादिसाधनत्वेऽपि प्राप्तिरविरुद्धा॥ ७॥ ३॥ ३॥

तथावभृथः॥ वरुणप्रघासेषु वारुणाग्निष्कासेन तुषैश्चावभृथं यन्तीति श्रुतम्। तत्र दार्शपूर्णमासिकमपां न्युत्सेकमवभृथपदेनानूद्य

लाघवात्तुषनिष्कासौ विधीयेते । षष्ठीबलात् । यच्छब्दस्य निपातत्वाच्च परस्परान्वयस्य व्युत्पन्नत्वेन न विधेयानेकता दोषाय । अस्ति चापां अवभृथेऽप्यवभृथपदप्रयोगः, एष वै दर्शपूर्णमासयोरवभृथ इत्यादौ । अतो नात्र विशिष्टकर्मान्तरविधिः । अवभृथशब्दस्य च विधौ गौणत्वमप्रसिद्धस्य नामातिदेशकत्वमिति प्राप्ते ।

अनेकशक्तिकल्पनाभिया अपां अवभृथे आर्थवादिकावभृथशब्दस्य जघनसम्बन्धित्वसादृश्येन गौणत्वात्प्राप्तकर्मानुवादेनानेकगुणविधाने वाक्यभेदापत्तेश्च कर्मान्तरविधिरेवायम् । सत्यामपि च निपातस्योपपदार्थान्वयव्युत्पत्तौ उपपदार्थद्वयस्य परस्परान्वयव्युत्पत्त्यभावाद्विधेयानेकता स्पष्टैव । अतश्च गुणात्प्रकरणान्तराद्वाऽत्र कर्मभेदः । याज्ञिकोक्तिर्नित्यवदिति न्यायेन पदान्तरकल्पनया संस्कार्यत्वात् ।

एकादशे वक्ष्यमाणमर्थकर्मत्वं परं तुषांश इत्युक्तं प्रकरणान्तराधिकरणे कौस्तुभे । अतश्च तत्रावभृथनाम्ना सौमिकावभृथधर्मातिदेशः । अतएव, नाप्सुदीक्षुहोति, न साम गायति, न गमनमन्त्रं जपतीत्यादिनिषेधोऽपि सङ्गच्छते । अतिदेशेऽपि च न तद्गीयद्रव्यस्यैककपालस्यातिदेशः । औपदेशिकेन विशेषविहितेन च तुषनिष्कासद्रव्येण लाघविकस्य सामान्यविहितस्यातिदेशप्राप्तस्य द्रव्यस्य बाधात् ॥ ७ ॥ ३ ॥ ४ ॥

गुणविधिस्तु ॥ सोमे आतिथ्येष्टिर्वैष्णवो नवकपाल इत्यनेन वैशेषिकधर्मयुक्ता विहिता । राजसूये च वैष्णवस्त्रिकपाल इति श्रुतम् । तत्र वैष्णवशब्दस्य न धर्मातिदेशकत्वम् । सत्यपि उत्पत्तिशिष्टगुणावरोधादिनोभयकर्मविधित्वे वैष्णवशब्दस्योभयत्रापि देवता-

विधायकत्वेन धर्मातिदेशकत्वानुपपत्तेः । न चातिदेशेनैव देवतायाः प्राप्तिसम्भवेन वक्रार्थत्वाभाय धर्मातिदेशकत्वाङ्गीकरणम् । गौणत्वे प्रमाणाभावात् । वक्रार्थत्वाभाय अयन्यत्वाद्यङ्गीकारे अतिप्रसङ्गात् ॥ ७ ॥ २ ॥ ५ ॥

निर्मन्थ्यादिषु चैवम् ॥ अग्नौ निर्मन्थ्येनेष्टकाः पचन्ति, पत्नी बर्हिषा यूपावटमवस्तृणाति, आज्येन पश्रुमनक्ति इति श्रुतम् । तत्र पूर्ववदेव निर्मन्थ्यशब्दो मन्थन*क्रियाविधायकत्वेन गौणत्वायोगाच्च पाशुकानां मन्थनधर्माणामतिदेशार्थः । बर्हिराज्यशब्दौ च द्रव्य-विधित्वाच्च दार्शपूर्णमासिकबर्हिराज्यधर्मातिदेशार्थौ । न च चिकपाकस्य नामातिदेशेन धर्मप्राप्त्यभावेऽपि ऐष्टिकधर्मातिदेशेन निराकाङ्क्षत्वाच्च गौणत्वाङ्गीकारः । प्रकृते तु धर्माकाङ्क्षयैव गौण-त्वाङ्गीकाराच्चामातिदेशोपपत्तिरिति वाच्यम् । लोकतोऽपि मन्थ-नादिधर्मलाभेन श्रुत्यर्थत्यागे प्रमाणाभावात् ॥ ७ ॥ २ ॥ ६ ॥

सौमिकन्तु ॥ चातुर्मास्येषु वैश्वदेववरुणप्रघासशाकमेधशुना-सीरीयाख्यानि चत्वारि पर्वाणि । तत्र, द्वयोः प्रणयन्ति तस्माद् द्वाभ्यामेतीति श्रुतम् । तत्र भाष्यकारः सप्तभिः सूत्रैरधिकरण-द्वयमेवं व्याचख्यौ । तत्राद्ये तावत्सौमिकं सधर्मकं प्रणयनमिदं, उत-प्राकृतमधर्मकं गार्हपत्याद्दाहवनीयं प्रतीति चिन्तायाम् ।

प्राकृतस्य चोदकेनैव प्राप्तत्वेन विधिवैयर्थ्यापत्तेर्वचनार्थवत्त्वाय प्रणयतिरयं सौमिकप्रणयनपरस्तद्विधानार्थः । अतएव तत्रोत्तरवेदेः

---

* मथन,—इति सो॰ पुस्तके पाठः । एवं परत्र सर्वत्र ।

सत्त्वेन तत्प्राप्तौ, न वैश्वदेव उत्तरवेदिमुपवपन्ति* न शुनासीरीय इति तत्पर्युदासोऽपि सङ्गच्छते। तेन तयोरुत्तरवेदिव्यतिरिक्ताः सौमिकप्रणयनधर्माः कार्याः। यत्तु उपाच वपन्तीत्युत्तरवेदेरुत्पत्तिवाक्यं, यत्रोत्तरवेद्यामग्निं निदधातीति तस्या विनियोगवाक्यं, तन्मध्यमयोः पर्वणोः प्राकृतप्रणयने एवोत्तरवेदिविधायकमिति प्राप्ते।

न प्रणयतिः सौमिकप्रणयनस्यैव विशिष्योपस्थापकः। सन्निहितत्वात्तु प्राकृतमेवोपस्थापयति। अतस्तस्यैवातिदेशप्राप्तेः पूर्वप्रवृत्त्या विधिरनुवाद एव वा। तत्प्रयोजनं च यद्यपि नेतरयोः परिसंख्या, वैदोष्यापत्तेः। प्रणयनाभावे इतरपर्वणोरग्न्यभावेन यागानुपपत्तेश्च। नाप्यर्थवादोपपत्तिः, विध्यभावे अर्थवादत्वस्यैवानुपपत्तेः। तथाप्युत्तरवेदिरूपगुणार्थं पुनः श्रुतिः। एतदभावे हि चतुर्ष्वपि प्राकृतप्रणयनप्राप्तौ देशापेक्षायामुत्तरवेदिविधानं चतुर्ष्वपि प्राप्नुयात्। एतत्सत्त्वे तु पर्वद्वयवृत्तिप्रणयनस्यैव विशिष्योपदेशेनोपस्थितत्वात्तत्रैवोत्तरवेदिस्तदीयाग्निनिधानमेव च द्वारमिति सिध्यति। अत इतरपर्वणोरुत्तरवेदिपरिसंख्यैवानुवादप्रयोजनमिति॥

द्वितीयाधिकरणे तु सोऽयमनुवादः प्रथमोत्तमयोर्मध्यमयोर्वेति चिन्तायाम्। मध्यमविषयत्वे तत्रैवोत्तरवेदिप्राप्तेः प्रथमोत्तमयोस्तत्पर्युदासानुपपत्तिप्रसङ्गात्प्रथमोत्तमविषयत्वमेव। ततश्च तत्रैवोत्तरवेदिप्राप्तौ तत्रैवायं निषेध इति तयोरुत्तरवेदेर्विकल्पः।

---

* मुपवपन्ति,—इति सो॰ पुस्तके पाठः।

हाभ्यामेत्यूह वा एतद्यज्ञस्य यद्वरुणप्रघासाः साकमेधाश्चेति प्रणयनार्थवादस्तु लक्षणया प्रथमोत्तमपर इति प्राप्ते ।

लक्षणाया विकल्पस्य चान्याय्यत्वान्मध्यमविषय एवायमनुवाद उत्तरवेद्युपसंहारार्थः । एवं च प्रथमोत्तमयोरुत्तरवेदिप्राप्त्यभावात्तत्र तत्प्रतिषेधो नित्यानुवादः । तत्प्रयोजनं चोपात्र वपन्तीत्यादेर्वरुणप्रघासावान्तरप्रकरणबाधः । एतदभावे हि तदवान्तरप्रकरणे पठिताया उत्तरवेदेस्तन्मात्राङ्गत्वप्रसक्तौ तदितरेषु त्रिषु पर्वसु नित्यानुवादः स्यान्न द्वयोः । अतो द्वयोर्नित्यानुवादबलादवान्तरप्रकरणबाधेन महाप्रकरणात्सर्वाङ्गत्वप्रसक्तौ द्वयोः प्रणयन्तीत्यनेन मध्यमयोरुत्तरवेद्युपसंहारोऽनूद्यते ।

न चैवमपि प्रथमोत्तमयोः पर्युदासवशेनावान्तरप्रकरणबाधवन्मध्यममात्रविषयत्वस्यापि उत्तरवेद्युत्पत्तिविनियोगयोः सिद्धेर्द्वयोः प्रणयन्तीत्यस्य वैयर्थ्यमिति वाच्यम् । उत्तरवेद्यामग्निं निदधातीत्यनेन हि न निधानानुवादेनोत्तरवेदिर्विधीयते । अतिप्रसङ्गात् । नाप्यग्निनिधानानुवादेन, विशिष्टोद्देशापत्तेः । नाप्यग्निमात्रोद्देशेन, गार्हपत्यादावप्युत्तरवेद्यापत्तेः ।

किं तु अतिदेशप्राप्तेः पूर्वं प्रवृत्त्या उत्तरवेदिविशिष्टप्राकृतनिधानमेवाभ्युद्देशेन विधीयते उत्तरवेदिमात्रफलकम् । अतश्चौपदेशिकप्रणयनविध्यभावे प्रणीताग्निनिधान इव कपाल-तापार्थाग्निनिधानेऽपि तदापत्तिः । चौपदेशिकप्रणयनविधिसत्त्वे तु तस्यैव पुरःस्फूर्तिकस्य देशापेक्षायामातिदेशिकविधितः पूर्वमुत्तरवेदिरूपदेशविधानाच्च तापार्थाग्निनिधाने उत्तरवेदिप्राप्त्यापत्तिः । अत-

एवौपदेशिकप्रणयनविधिसत्त्वेऽपीतरयोरातिदेशिकप्रणयनसत्त्वादुत्तरवेद्यापत्तिरित्यपास्तम्। औपदेशिकप्रणयनस्य पुरःस्फूर्तिकत्वेन तत्रैवोत्तरवेदिविधानात्। अतो भाष्यकारमतेऽपि न वार्त्तिकोक्तदूषणावकाशः॥

वार्त्तिककारमतोपपादनं त्वेवम्। सप्तभिः सूत्रैस्त्रिपक्षमेकमधिकरणम्। तत्र प्राकृतं सौमिकं वा प्रणयनमिति पूर्वं पक्षद्वयं कृत्वा। अपूर्वं प्रणयनान्तरमत्र विधीयते। न तु सौमिकम्। तस्यानुपस्थितत्वात्। नापि प्राकृतम्। प्राकृतप्रणयनस्याहवनीयोत्पादकत्वेनाहवनीयापादानकत्वासम्भवात्। आहवनीयाद्द्वावग्नी प्रणयतोऽध्वर्युश्च प्रतिप्रस्थाता चेति ब्राह्मणान्तरवचने अवश्यं प्राकृतप्रणयनोत्तरमाहवनीयापादानकप्रणयनान्तरविधानावगतेः। शाकमेधेऽपि च बौधायनादिकल्पसूत्रानुसारेणैतत्समानार्थकस्याहवनीयापादानकप्रणयनान्तरविधायकविधेः कल्पनेन प्रणयनान्तरविधानावगतेः। तदुभयसमानार्थकतया द्वयोः प्रणयन्तीत्यस्यापि आहवनीयापादानकप्रणयनान्तरविधायकत्वस्यैव निश्चयेन प्राकृतप्रणयनानुवादकत्वानुपपत्तेः। अतः प्राकृतप्रणयणोत्तरमाहवनीयापादानकं प्रणयनान्तरमपूर्वं विधीयते।

तच्च गत्यर्थवादान्मध्यमयोरेव। तस्य चापेक्षितो देशविशेष उत्तरवेदिरुत्पत्तिविनियोगविधिभ्यां विधीयतइति तावपि मध्यमविषयावेव। एवं च प्रथमोत्तमयोस्तत्प्रतिषेधोऽपि नित्यानुवाद एव, भाष्यकारमते इवावान्तरप्रकरणबाधार्थ इति सर्वमनाकुलम्। याज्ञिकास्तु पशुबन्धवत्सौमिकानेव धर्माननुतिष्ठन्ति। उत्तरवेदि-

परिभाषां परं शब्दामाचमौपदेशिकं कुर्वन्ति। तन्मते प्रणयन्तीति बहुवचनमपि शब्दहोमादिषङ्गावादुपपद्यत इति ध्येयम् ॥ ७ ॥ २ ॥ ७, ८ ॥*

खरसाम ॥ पूर्वं उत्तरवेदिप्रतिषेधरूपेण लिङ्गेन सौमिकप्रणयनातिदेशे निरस्तेऽधुना लिङ्गादप्यतिदेशोऽस्तीत्येवं तदपवादः प्रस्तूयते। गवामयने चयः खरसामानः सप्तदशस्तोमकलादिधर्मकायागाः समाम्नाताः। अन्यत्रापि द्वौ खरसामानाविति। तथा वैश्वदेवे पर्वणि, वैश्वदेव्यामिक्षा, द्यावापृथिव्य एककपाल इति सधर्मकौ यागौ। अन्यत्रापि मैत्रावरुण्यामिक्षा काय एककपाल इत्याद्यामिक्षैककपालद्रव्यकायागाः श्रुताः। ते किं खरसामानो गवामय-निकखरसामविकृतयः[†]। अन्ये आमिक्षायागाश्च वैश्वदेविकामिक्षायागस्य। अन्ये एककपालाश्च वैश्वदेविकैककपालस्य। उत नेति चिन्तायाम्।

गणत्वादिनैव कल्पितेनातिदेशेनेतिकर्तव्यताकाङ्क्षाशान्तेः खरसामादिशब्दानां च खराख्यसामादिरूपगुणविधायकत्वेनानतिदेशकत्वाच्चोत्पत्तियागप्रकृतिकत्वमिति प्राप्ते। गणत्वादिसादृश्यापेक्षया खरसामकत्वादिविशेषसादृश्येन लिङ्गोपस्थितेनातिदेशकल्पनाच्चोदनालिङ्गातिदेशेन तत्प्रकृतिकत्वम्।

लिङ्गानि च, खरसामसु तावत्पूर्वत्र: गवडी द्वौ खरसामानावित्युक्त्वा गवडे यत्तृतीयं सप्तदशमहस्तदन्यस्य चयस्त्रिंशस्तोमकस्य

---

* वार्त्तिककारमते नात्राधिकरणद्वयं किंत्वेकमेवाधिकरणम्।

† खरसामप्रकृतिकाः,—इति सो॰ पुस्तके पाठः।

स्थानेऽभिपर्य्याहरन्ति मयाणां सप्तदशानामनूचीनताया इति इयोः स्तरसायोः सप्तदशस्तोमकलदर्शनम् । मैचावरुणामिचायाश्च न वाजिनेन प्रचरन्तीति प्रतिषेधवचनम् । आग्रयणे द्यावापृथिव्यैक-कपालं विधाय यत्सर्वंहुतं जुहोति या लेका परिचयाहुतो हुतः पर्यावर्त्तते या द्वितीया आज्यस्यैव द्यावापृथिव्यौ यजेतेति एक-कपालयागे सर्वहुतत्वादिप्रयुक्तं दोषमभिधाय वैकल्पिकाज्ययाग-विधिपरं वचनम् ।

न हि उक्तातिदेशाभावे सप्तदशस्तोमकत्ववाजिनेज्यासर्वहुत-त्वादीनां प्राप्तिः सम्भवति । तस्मादतिदेशः । अयं च तत्तदसाधा-रणधर्माणां साधारणधर्माणां च नवप्रयाजत्वप्रसूनमयत्वादीनां चातिदेशः । मुख्यानां भूयसां च प्रधानान्तराणामनुरोधेन तु क्वचिद्विरोधे साधारणधर्माणां बाधः । याज्ञिकास्तु असाधारणा-नामेवातिदेशं मन्यन्ते ॥ ७ ॥ ३ ॥ ९ ॥

कर्मजे ॥ कर्मनामधेयानामग्निहोत्रादिपदानामतिदेशकत्व-मुक्तम् । तद्वदेव च संस्कारनाम्नामपि यूपादिशब्दानां खलेवाली यूपो भवतीत्यादौ सिद्धमेवातिदेशकत्वम् । तद्वत्तु अनोवाहः प्रभृतीनां पदानां किं तत्तदुत्पादकक्रियानिमित्तत्वमुत जातिनिमि-त्ततेति अतिदेशसिद्ध्यर्थं विचार्यते । तत्र तच्चणादिक्रियाऽभावे तच्छब्दप्रयोगाभावात्तत्तत्क्रियानिमित्तका एवैते शब्दाः । निर्मन्थ्य-यूपादिशब्दवत् । अतश्च तद्वदेवानोददातिवासोददातीत्यादौ तच्च-णादिरूपक्रियाविशिष्टद्रव्यस्यैव दानाङ्गतया विधानात्तचणं वानं च प्रयोगमध्ये कृत्वा अनोवासस्य देयम् । अत्र च तत्तक्रियाया वस्तुत-

उपदेशेऽपि अन्यत्र लोकादौ कृष्णाया एव विधानादतिदेशलव्यव-हारोभाक्त इति ध्येयम्। सर्वथा तच्छणादि प्रयोगमध्येऽनुष्ठेयमिति प्राप्ते।

क्रियानामोत्तरमपि जातिदशायां प्रयोगाल्लाघवाद्यौगिकत्वा-भावाच्च जातावेव शक्तिः। जातिस्तु परं क्रियाभिव्यङ्ग्या तज्जनित-संयोगविशेषादिरूपफलाभिव्यङ्ग्या वेति तदुत्तरमेव शब्दप्रयोगः। न त्वेतावता शब्दः क्रियावाचीति तस्या अविधेयत्वेनानङ्गत्वाल्लौकिकमेव चिह्नमनोवाचस्य देयम्। निर्मन्थशब्दस्तु यौगिक इति युक्तं तस्य मथनक्रियाविधायकत्वम्। यूपशब्दे तु क्रियानामोत्तरं प्रयोगेऽपि तज्जन्यादृष्टविशिष्टकाष्ठवाचित्वाच्च शुद्धजातिवाचित्वमिति* युक्त एव तत्र संस्कारातिदेशः।

वस्तुतस्तु यूपकार्ये स्वत्वेनाजीविधानाद्यूपशब्दस्य न संस्कारातिदेशकत्वम्। संस्कारातिदेशस्तु स्थानापत्त्येति पूर्व्वपक्षां†स्तूपोक्तयूपपद-दृष्टान्तोऽप्ययुक्त एव॥ ७॥ ३॥ १०॥

विवर्द्धे॥ गर्गत्रिरात्रे आज्यदोहानि सामानि प्रहृत्याग्नि-मुपनिधाय स्तुवीतेति श्रुतम्। तत्राग्निः किं वैदिको लौकिको-वेति चिन्तायाम्। यद्यपि द्वादशे आहवनीयादीनां योग्यतया लौकिकपाकार्थत्वं निरसिष्यते, तथापि यैरप्यधिकृतोयांस्तु शक्ये प्रयोक्तुमिति सामान्यवचनेन वैदिककर्म्मसाधार्थत्वावगतेर्वैदिक एवेति प्राप्ते।

---

* शुद्धजातित्वमिति,—इति सो॰ पुस्तके पाठः।

† पूर्व्वपक्ष,—इति नास्ति आदर्शपुस्तके।

आहवनीये जुहोतीत्यादिविशेषवचनानामुपपन्नत्वे प्रमाणाभावादग्नेरप्यधिकृत इत्यस्य च होममात्रविषयत्वेऽपि सार्थक्यादुपनिधानविधेश्च लौकिकाग्निग्रहणेनापि चरितार्थतया आहवनीयादीनां, वि वा एष इन्द्रियेण वीर्येण ऋध्यते यस्याहिताग्नेरग्निरपक्षायतीति वचनेन निषिद्धस्यायतनादाहरणस्याक्षेप्तुमशक्यत्वाल्लौकिकाग्नेरेव ग्रहणम्। अतएव धिष्ण्याग्नीनामपि व्याघारणमात्रप्रयोजनत्वादग्रहणम्। यदि परं व्याघारणोत्तरं लौकिकत्वाविशेषादुपस्थितत्वात्तेषामेव ग्रहणमित्याशङ्क्येत, तदाऽस्तु नाम तत् ॥ ७ ॥ ३ ॥ ११ ॥

संस्कृतम् ॥ यूपैकादशिन्यां यूपसमीपे एकं काष्ठं स्थापनीयमिति विधायोपशयो यूपो भवतीति श्रुतम्। तच्चोपशये काष्ठे यूपधर्मान् प्रोक्षणादीन् संस्कारनिमित्तत्वादसत्यपि स्थानापत्त्यतिदेशे यूपपदं नामातिदेशविधयाऽतिदिशेदिति प्राप्ते।

अस्य गौण्या शक्त्यैव वा धर्मविधायित्वे वाक्यभेदापत्तेरुपशयस्तुत्यर्थत्वेन तद्विध्येकवाक्यतापन्नस्य पृथग्विधित्वानुपपत्तेरर्थप्राप्तकतिपयच्छेदनादिधर्मयोगेन गौण्या वृत्त्योपशयस्तुतिरेवेदं न तु नामातिदेशकम् ॥ ७ ॥ ३ ॥ १२ ॥

कर्मणः ॥ अग्नौ पृष्ठैरुपतिष्ठत इति श्रुतम्। तत्र पृष्ठशब्देन किं विधीयत इति चिन्तायाम्। पृष्ठशब्दस्य स्तोत्रविशेषवचनत्वात्तस्य च यज्ञत्वाभावेन यजनाङ्गतया विधानानुपपत्तेः, प्रत्ययाभिहितभावनान्तराण्येव पृष्ठधर्मकाणि धात्वुपात्तसमीपावस्थानेतिकर्तव्यताकानि विधीयन्ते। पृष्ठधर्मकत्वाच्च तेषां स्तोत्ररूपतासिद्धिः।

धात्वुपात्तमपि च समीपावस्थानमदृष्टकार्यत्वात्कर्मान्तराङ्गमेव । अथवा पाशाधिकरणन्यायेन बहुवचनानुरोधेन पृष्ठप्रातिपदिके गौण्यङ्गीकारस्यायुक्तत्वाद्बहुवचनेनैकत्वादि बाधयित्वा वचनाङ्गतया ज्यौतिष्टोमिकपृष्ठविधिरेवायम् । समीपस्थितिस्तु पूर्ववत्पृष्ठस्तोत्रस्यैवाङ्गम् ।

वस्तुतस्तु पृष्ठबहुत्वस्यापि ज्योतिष्टोमे साधितत्वात्सर्वाण्येव पृष्ठस्तोत्राणि वचनाङ्गतया विधीयन्ते । न तु पृष्ठमन्त्राणां रथन्तरादिसाम्नां वा विधानम् । उपक्रमस्थपृष्ठपदे लक्षणाप्रसङ्गात् । एवं च अजन्यमात्मनेपदमेव बाहुलकतया साधुत्वार्थं व्याख्येयमिति प्राप्ते ।

पृष्ठशब्दस्य शरीरावयवेऽपि शक्तत्वेन तत्करणकसमीपापस्थितेरपि विधिसम्भवेन स्तोत्रविधावेव नियामकाभावेन सन्दिग्धत्वान्निःसन्दिग्धात्मनेपदानुरोधेन पृष्ठपदमेवान्यथा नेतुमुचितम् । तथा हि । उपाम्वन्तकरण इति स्मृत्या आत्मनेपदबलात्समीपावस्थाने मन्त्रस्य करणत्वावगतेः साक्षात्सम्बन्धेनाभिधानातिरिक्ते व्यापारे मन्त्रस्य करणत्वासम्भवेऽपि समीपावस्थानप्रयोजनीभूताभिधानद्वारा समीपावस्थानं प्रति करणत्वाङ्गीकारात्तदनुरोधेन पृष्ठशब्दस्य मन्त्रपरत्वावगतिः । अतएव समीपावस्थानजन्याभिधानजन्यत्वसंसर्गेण मन्त्राणां समीपावस्थानं प्रति करणत्वमिति नाभिधानबाधाऽपि ।

वस्तुतस्तु ऐन्द्र्यधिकरणस्थकौस्तुभोक्तन्यायेन लक्षणया अभिधानमेव प्रकृताग्निकर्मकं धातुना विधीयते । तस्यैव पृष्ठपदार्थस्य करणत्वम् । समीपावस्थानं परमत्र अभि त्वेत्यादिमन्त्रलिङ्गादेव प्राप्त-

मनूद्यते । पृष्ठपदेन तु आत्मनेपदानुरोधेन पृष्ठस्तोत्रसाधनीभूता-मन्त्रा लक्ष्यन्ते ।

वस्तुतस्तु षाडहिकेषु रथन्तरादिषु षट्सु सामसु पृष्ठशब्दस्यान्वाख्यानार्थवादवशेन निरूढलक्षणायाश्चित्राधिकरणे कौस्तुभे व्यवस्थापितत्वात्तान्येवाभिधानं प्रति करणत्वेन विधीयन्ते । सम्भवति च स्तोत्र इवाभिधानं प्रति साम्नः करणत्वं स्वगतस्वराभिव्यक्तिद्वारा । अतएव तदाधारभूतानां योन्यृचामप्यभिधानाङ्गत्वम् । उत्तरयोस्तु एकं साम तृचे क्रियते स्तोत्रीयमिति स्तोत्र एव विनियोगान्नाभिधानाङ्गत्वप्रसक्तिः । अतश्च योन्याधारकरथन्तरादिषाडहिकसामविशिष्टाभिधानमेवात्र स्वघटितसंस्कारकत्वेन विधीयत इति सिद्धम् । सामान्ये उपदेशोऽप्ययं अन्याङ्गस्य पूर्वावगममपेक्ष्येह चिन्तितः ॥ ७ ॥ ३ ॥ १४ ॥

इति श्रीखण्डदेवकृतौ भाट्टदीपिकायां
सप्तमाध्यायस्य तृतीयः पादः ॥

## अथ सप्तमाध्यायस्य चतुर्थः पादः ।

इतिकर्तव्यता ॥ तदेवं सप्रसङ्गो नामातिदेशो निरूपितः । इदानीं कल्पितवचनातिदेशो निरूप्यते । यत्र उद्भित्सौर्यादौ नैवेतिकर्तव्यताऽऽम्नाता, यत्र वा द्रव्यदेवतोपहोमादिरूपा समाम्नाताऽपि न निराकाङ्क्षीकरणसमर्था, तत्र भावनायाभाव्येन तस्याः करणानुग्राहकव्यापाररूपेतिकर्तव्यताकाङ्क्षायां वक्ष्यमाणसादृश्येन प्रकृतिभावनोपस्थितौ तदंशत्रयस्याप्युपस्थितेः, तत्र च फलकरणयोरनपेक्षितत्वादिनाऽतिदेशस्य निराकरिष्यमाणत्वादितिकर्तव्यतैव प्रकृतिवदित्येवं कल्पितेन विकृतिवाक्यशेषरूपातिदेशेन विकृत्यङ्गतया विधीयते । न च प्रबलप्रमाणेन प्रकृत्यङ्गतयाऽवगतायाः कथं विकृत्यङ्गत्वमिति वाच्यम् । प्रबलस्यापि विकृतिविधेरितिकर्तव्यताकाङ्क्षाशान्त्यभावेनानर्थक्यप्रसङ्गाद्दुर्बलप्रमाणबाधकत्वानुपपत्तेः ।

अतः सर्वत्राम्नातेतिकर्तव्यताकस्थले आम्नातेतिकर्तव्यताया अतिदेशः । आम्नातेतिकर्तव्यताकाश्च सोमदर्शपूर्णमासादयः श्रौताः श्रौताग्निसाध्याः । पार्वणस्थालीपाकादयश्च स्मार्ताग्निसाध्याः । त एव मूले लौकिकपदेनोच्यन्ते । तथाविशेषात्सौर्यादावुभयोरप्यतिदेशः । यदि तु प्रकृतावेकैकस्याः प्रत्येकं निराकाङ्क्षीकरणसमर्थाया इव समुच्चयेन मिलिताया निराकाङ्क्षीकरणसामर्थ्यकल्पने प्रमाणाभावादेकस्या एवातिदेश इत्याग्रहस्तेन । ततोऽस्तु लौकिक्या एवातिदेशः । तस्याः कल्पसूत्रकारादिवचनैराग्रयणीकर्मादावतिदेशस्य क्लृप्तत्वेन दृष्टप्रवृत्तिकतया सौर्यादावपि तस्या एवातिदेशात् ।

यत्तु सौर्यादौ, प्रयाजे कृष्णलं जुहोति, ऐन्द्रावार्हते अर्धं वर्हिषो लुनाति, पितृयज्ञे न होतारं वृणुते, पशुमेधीये आज्यभागौ यजति इत्यादिविकृदर्शनम् । तच्च नित्यानुवादवचनानि स्युरित्येवं परिहर्तव्यम् । तथा हि । यत्र प्रयाजा दर्शपूर्णमासादौ, तत्र कृष्णलहोमविधिरिति तन्त्ररत्नकारः ।

वस्तुतस्तु प्रयाजोद्देशेन कृष्णलहोमान्तरविधावारादुपकारकत्वेन सर्वप्रयाजार्थं तन्त्रेणानुष्ठानापत्तेः प्रयाजे प्रयाजे इति वीप्सानुवादानुपपत्तिः । प्रयाजीयहोमोद्देशेन कृष्णलमात्रविधौ विशिष्टोद्देशः । होममात्रोद्देशेन तद्विधावतिप्रसङ्गः । अतः प्रयाजोद्देशेन कृष्णलमात्रं पूर्वपक्षे आज्येन सह विकल्पेन प्रतिनिधित्वेन वा विधीयते । सिद्धान्ते तु तद्बाधकत्वेन । प्रयाजाश्च पूर्वपक्षे दर्शपूर्णमासीयाः सिद्धान्ते सौर्यीया इत्येतावान्विशेषः । जुहोतिस्तु संस्कारकत्वेन प्राप्तोऽनूद्यते ।

अत एव भाष्यकारोक्तमस्य वचनोदाहरणत्वमपि पञ्चमविधिप्रकारापत्तेरयुक्तम् । याज्ञिकास्तु आज्येनैव प्रयाजहोमे कृष्णलप्रक्षेपमधिकं कुर्वन्ति । एवं अर्धं वर्हिष इत्यत्रापि यत्र दर्शादौ वर्हिर्लवनं तत्र लवनानुवादेनार्धत्वविधिः । न होतारमिति तु नित्यानुवादः । आज्यभागविधिस्तु अपूर्वविधितया वचनमिति द्रष्टव्यम् । यत्र हि गुणोपादानं भवेत्तत्र सर्वत्र तृतीयविधिप्रकारलोभेन यत्नेत्यस्यैवोदाहरणं भवेन्न वचनस्य । अस्तु वा तत्र* प्राकरणिक-

* इत्यमेव पाठः सर्व्वत्र । यत्र,– इति तु भवितुमुचितम् ।

गुणावरुद्धे गुणान्तरस्य प्रतिनिधित्वादिनापि कथञ्चिन्निवेशासम्भवस्तद्वचनोदाहरणम्। सर्वथातिदेशाभावेऽपि लिङ्गोपपत्तिरितिप्राप्ते।

अप्रत्यक्षपठितवेदविहितत्वसादृश्याद्वैतानिकाग्निसाध्यत्वसादृश्याच्च वैदिका एवातिदेशः। अतिदेशाभावेऽपि हि सौर्यादीनां गृह्यसूत्रेष्वनुक्तत्वाच्च स्मार्ताग्निसाध्यत्वम्। अतः सामान्यविहिताहवनीयादिसाध्यत्वे बाधकाभावात्सादृश्योपपत्तिः। अत एवंजातीयकेषु दर्शपूर्णमासादिधर्माणामेवातिदेश इति सिद्धम्। लिङ्गान्यप्येवं सत्युपपन्नानि भवन्ति। इतरथा प्रकरणबाधो वाक्यानर्थक्यं वा प्रसज्येत ॥ ७ ॥ ४ ॥ १ ॥

द्वादशाहिकम् ॥ तदेवं निरूपितस्त्रिविधोऽतिदेशः। तत्र प्रत्यक्षवचनातिदेशस्य द्विविधादप्यतिदेशात्प्राबल्यं धर्माणामुपात्तत्वादानर्थक्यापत्तेश्च पूर्वमेव प्रसङ्गादुपपादितम्। अतस्तादृशविषये चोदनालिङ्गातिदेशस्य नैव कल्पना। नाम्नस्तु यदि समानविषयत्वं तदा प्रत्यक्षवचनापादितलिङ्गसादृश्यमादायैव नाम्नो गौणत्वोपपत्तेर्नातिदेशकत्वम्। यदि तु भिन्नविषयत्वेन सादृश्यसम्पत्तिस्तदा नाम्नोऽप्यविरुद्धधर्मातिदेशकत्वमवधेयम्। एवं नामातिदेशवत्त्वेऽपि समाने असमाने वा विषये चोदनालिङ्गातिदेशस्य नैव कल्पनम्। नाम्नः प्रत्यक्षत्वेन तेनैवेतिकर्तव्यताकाङ्क्षाशान्तेः। अतएव गवामयने ज्योतिर्गौरायुरित्येवमादिष्वहःसु एकाहकाण्डपठितज्योतिरादिधर्माणां नाम्ना प्राप्तिः। न तु गणत्वसादृश्याद्द्वादशाहधर्माणाम्।

न च अहरन्तरार्थमवश्यकल्प्येन गणत्वसादृश्याद्गवामयननिष्ठ-

द्वादशाहिकातिदेशेनैव तद्धर्मप्राप्तिरावश्यकी । तत्तदहरुत्पत्तिवाक्येष्वेव भावनाया इतिकर्त्तव्यताकाङ्क्षायाङ्गणान्तर्गतत्वसादृश्येन चातुर्मास्यान्तर्गताग्नेयादिवत्प्रत्येकमेवातिदेशकल्पनेन ज्योतिरादौ नामातिदेशसत्त्वेन चोदनालिङ्गातिदेशस्यैवाकल्पनात् । न च साधवाङ्गवामयने एक एवातिदेशः । गवामयनत्वस्य प्रत्येकवृत्तित्वेन प्रत्येकमेव फलसम्बन्धात्साधनानां समुच्चयेऽपि तत्तत्साधनानां प्रत्येकमेवेतिकर्त्तव्यताकाङ्क्षायां प्रत्येकमेव तत्कल्पनात् । अतो ज्योतिरादौ नैव चोदनालिङ्गातिदेशः ।

न चैवं तेषु ह्युपसत्त्वस्यैव प्राप्तेर्द्वाभ्यां लोमावद्यति द्वाभ्यां मांसमित्यादिषट्द्विकान्यनुक्रम्य यद्द्वादशोपसदो भवन्तीति द्वादशाहिकद्वादशोपसत्त्वदर्शनानुपपत्तिः । तस्य भूयोऽहरन्तरानुरोधेन नामातिदेशप्रापितचित्वबाधकत्वोपपत्तेः । द्वादशस्तु तिसृणामप्युपकारकत्वोपपत्तेश्च । तस्मात्तत्तत्तुल्याकालीनाङ्गानामन्येषां वा चित्वाद्यतिरिक्तानामेव नाम्नाऽतिदेश इति सिद्धम् ।

नन्वेवमप्येकादशिन्या विहारदर्शनानुपपत्तिः । तथा हि । ज्योतिष्टोमे सौत्येऽहनि वैकल्पिकी एकादशिनी समाम्नाता । तस्याश्च द्वादशाहे विहारः श्रुतः । तस्यातिदेशेन गवामयने एकषष्ट्यधिकशतत्रयसुत्यात्मके प्राप्ताविदं श्रुतम् । यस्यातिरिक्तमेकादशिन्यामालभेरन्नाप्रियं भ्रातृव्यमतिरिच्येताथ यद्द्वौ द्वौ पशू समस्येयुः कनीय आयुः कुर्वीरन्यद्येते ब्राह्मणवन्तो नवपशव आलभ्यन्ते नाप्रियं भ्रातृव्यमतिरिच्यते न कनीय आयुः कुर्वत इति । गवामयने हि सम्पूर्णैकादशिन्याः द्वात्रिंशद्वारमावृत्तौ द्विपञ्चाश-

दधिकग्रतत्रयमहानि पूर्यन्ते। अवग्रिष्टानि नव। तत्र पुनरेकादग्रिनीकरणे अतिरेकः समासो वा आपद्येत। अतो ग्राह्मणवतां तेषु विधानम्। तद्यदि चोदनालिङ्गातिदेशेन ज्योतिरादिसुत्यास्वपि विहारः प्राप्यते, तत एतल्लिङ्गमुपपद्यते। यदि तु नामातिदेशप्राबल्यं, तदा तद्बलेन ज्योतिरादिसुत्यासु सम्पूर्णाया एकादशिन्या एव प्राप्तेर्विहारदर्शनानुपपत्तिरिति चेत्।

न। एकादशिनीविहारस्यानारभ्याम्नातस्य गवामयने औपदेशिकत्वेन तदंशे नामातिदेशबाधात्। तथाहि। यथाहि प्रभवः पशवः सुत्यानेतानन्वृषीणामालभेरन्नाग्नेयमेव प्रथमेऽहन्यालभेरन्सारस्वतीं मेषीं द्वितीये सौम्यं बभ्रुं तृतीये वारुणमन्ततोऽथ पुनर्ज्योतिरादीनां पर्यावर्त्तेषु आग्नेयमेव प्रथमेऽहनीत्याद्यनारभ्याधीतस्यैकादशिनीविहारस्य प्रकृतौ ज्योतिष्टोमे द्वादशाहे वा ज्योतिराद्यहःसमूहाभावेन निवेशानुपपत्तेस्तृतीयप्रकृतौ गवामयने निवेशः। अन्ततः एकादशेऽहनि। अतस्यौपदेशिकत्वान्नामातिदेशस्तदंशे एव बाध्यत इत्युपपन्नं लिङ्गम् ॥ ७ ॥ ४ ॥ २ ॥

इति श्रीखण्डदेवकृतौ भाट्टदीपिकायां
सप्तमाध्यायस्य चतुर्थः पादः ॥

सप्तमाध्यायः समाप्तः ॥

---

# अथ अष्टमाध्यायस्य प्रथमः पादः।



अथ विशेष ॥ तदेवं त्रिविधोऽतिदेशो निरूपितः। तथापि प्रत्यक्षवचननामातिदेशयोः कार्त्स्न्येन चिन्ता कृता। चोदनालिङ्गातिदेशस्य सामान्यतो निरूपितस्य प्रकृतिविशेषनिरूपणार्थमष्टममारभ्यते। तत्रैकस्मिन् सौर्यादौ एकविध्यन्तेनैव निराकाङ्क्षत्वात्सर्वविध्यन्तसमुच्चयायोगेऽपि नियामकाभावात् अनियमेनानेकप्रकृतिकविध्यन्तप्राप्तिरितिप्राप्ते।

अष्टदोषदुष्टविकल्पापत्तेर्यस्यैव सादृश्यविशेषेण शीघ्रोपस्थितिस्तत एव धर्मातिदेशः। तच्च सादृश्यं शब्दघटितमर्थघटितं वोत्तरत्र प्रपञ्चयिष्यते। अत एव यत्र कथमपि न सादृश्यस्य नियामकता, यथा द्यावापृथिव्यैकादशकपाले, तत्राग्नीषोमीयैन्द्राग्नयोर्विकल्पेनैव प्रकृतित्वम् ॥ ८ ॥ १ ॥ १ ॥*

प्रवृत्तत्वात् ॥ यत्र द्रव्यदेवतादिसन्निपत्योपकारकाङ्क्षासमग्रोसाकल्यात्मकरूपं कृत्स्नं विधानं, तत्राग्निहोत्रदर्शपूर्णमासज्योतिष्टोमादौ न परस्परं धर्मातिदेशः स्वसन्निधौ यावदाम्नातैरङ्गैरेवेतिकर्तव्यताकाङ्क्षाशान्तेः। सादृश्यस्यापि तादृशस्य नियामकस्याभावाच्च। ज्योतिष्टोमे तु तत्रैकशतं प्रयाजानूयाजा इति प्रकृतिप्राप्तप्रयाजाद्यनुवादेन शतसंख्याविधानलिङ्गाद्दीक्षणीयादिषु दार्शिक-

---

* भाष्यकारेणात्र द्वे अधिकरणे लिखिते।

धर्माणां प्रवृत्ततया तन्मध्यवर्त्तिनि सोमेऽपि दार्शिकविध्यन्तप्राप्तिं मन्यमानस्योत्तरम्।

दीक्षणीयादिषु विद्यमानानामेव प्रयाजादीनां परम्परया सोमसम्बन्धाद्वाजपेयस्य यूप इतिवत्त्स्येति षष्ठ्यनुवादोपपत्तेः, प्रवृत्तत्वस्य हेतोराकाङ्क्षानिबन्धनत्वेन तदभावे असाधकत्वाच्च सोमेऽतिदेशः। अत एव, एतं वै देवावज्रं कृत्वा सोममघ्नन् स्रुचौ बाहू तस्मात् स्रुचि सोमहविर्नासाद्यते नाज्येनाभिघारयतीति दर्शिकासादना-द्यभावानुवाद उपपद्यते। न ह्ययं पर्युदासविधिः। यदाह्वांशुरंशुष्टे देव सोमाप्यायतामित्येतद्विध्येकवाक्यत्वेन तदर्थवादस्यास्य स्वतन्त्रविधित्वानुपपत्तेः। किं च यदनुपोष्य प्रयायादग्नीषवत्सुमेनमनुमिन् लोके नेनीयेरन्, तस्मादुपोष्य प्रयायात् इति उपोषणविधि-रप्यनतिदेश उपपद्यते। अन्यथाऽतिदेशादेव तत्प्राप्तिसिद्धेर्विधिवै-यर्थ्यात्। तस्मान्न कश्चाप्यतिदेशः सोमे॥ ८॥ १॥ २॥

इष्टिषु॥ सौर्यादिषु इष्टिसमाख्यातेषु इष्टिसमाख्याकत्वसामान्यात् निर्वपतिधातुमदाख्यसम्बन्धित्वात्तद्धितपदविहितदेवताकत्वाच्च दर्शपूर्णमासविकारत्वमेव। अतएव प्रयाजे प्रयाजे इति लिङ्गम्। एवं पश्चावप्यग्नीषोमीये दैवसंज्ञके, तद्धितपदविहितदेवताकत्वादेव। न च तत्र यूपादिबहुतरधर्मविधानादेव निराकाङ्क्षत्वा-दनतिदेशः। तथाप्यावाहनासादनकुम्भ्यादिबहुतरदृष्टार्थधर्मानाम्ना-नेन साकाङ्क्षत्वात्।

किं च क्रयसन्निधावाम्नातोमिर्धर्मकोदेशः प्रथमं तावदतिदेशं कल्पयत्येव। ततश्च प्राकृतैर्धर्मैर्निराकाङ्क्षस्य स एव औपवसथ्ये-

ऽहनि इत्यनेन औपवसथ्येऽहन्यनुष्ठानेऽवगतेऽनुष्ठानसादेश्यादुपहोम-न्यायेन यूपादिग्रहणेऽपि नातिदेशकल्पनाप्रतिबन्धः। एकादश-प्रयाजान्यजति, औदव*माचारमाचार्य पशुमनक्तीत्यादिलिङ्गम-प्येवमुपपद्यते।

अन्येषु तु सवनीयादिपशुषु† दैवस्यातिदेशः। आलभतिचो-दनाकत्वपशुद्रव्यकत्वाद्यधिकतरसादृश्यात्। यूपाद्यधिकधर्मलाभाच। अतएव वपया प्रातःसवने चरन्ति, औदुम्बरो यूप इत्यादिलिङ्गम्।

एकादशिनेषु तु सुत्यादिनस्थलस्याधिक्यात् प्रचारविप्रकर्षादि-रूपधर्माधिक्याच सवनीयपशुविकारत्वम्। अग्निष्ठाद् द्वे द्वे रशने आदाय द्वाभ्यां द्वाभ्यां रशनाभ्यामेकैकं यूपं परिव्ययतीत्येतदपि दैरशन्यरूपसवनीयधर्मानुवादकमुपपद्यते। न ह्ययं विधिः। अग्नि-ष्ठायूपादित्यस्याविधेयत्वाल्लिङ्गत्वोपपत्तेः।

पशुगणेषु तु सौत्येष्वसौत्येषु वा पशुगणान्तर्गतत्वसादृश्याद्गण-धर्माधिक्यलाभाच्चैकादशिनविकारत्वम्। अत एवासौत्येषु प्रचार-विप्रकर्षाद्यप्राप्तावपि गणधर्मान्तरप्राप्तिरविरुद्धा। अतएव सौचा-मण्यां प्रतिपशु वैकल्पिके यूपानेकत्वे प्राप्ते तत्प्रतिषिध्य यूपैकत्व-नियमविधिरेकयूप आलभेतेत्ययमुपपद्यते।

उद्भिदादिषु तु अव्यक्तत्वसादृश्यात् ज्योतिष्टोमविकारत्वम्। अव्यक्तत्वं च स्वाङ्गतयाऽविहितदेवताकत्वम्। यद्‌वणाङ्गभूताया ऐन्द्र-

---

* औव,– इति सो. पुस्तके पाठः।

† पशुषु सवनीयादिषु,– इति सो. पुस्तके पाठः।

वायवादिदेवतायाः प्रसङ्गेन सोमयागोपकारकत्वेऽपि ज्योतिष्टोमाङ्ग-त्वाभावात्। अतस्तच्चोदकत्वेन तदतिदेशे सिद्धे आतिदेशिकग्रहणा-द्यङ्गभूतदेवताया उद्दिश्याद्युपकारकत्वकल्पनेन रूपलाभः सुलभः। अतएव स्तेने दीक्षणीयादिप्राप्तौ दीक्षणीयायां द्वादशमानं हिरण्यं दक्षिणा चतुर्विंशतिमानं प्रायणीयायामिति दक्षिणादानविधिः सङ्गच्छते।

एवं गवामयनादिसत्रेषु द्विरात्रादहीनेषु च सुत्यागणेषु द्वाद-शाहविकारत्वम्। अहोरात्रसाध्यकर्मवाचिपदवाच्यत्वसामान्यात्। अत्र हि रात्रिशब्दोऽहःशब्दसाहोरात्रिसाध्यकर्मविशेषपरः। सुत्यागणा-न्तर्वर्त्तित्वसादृश्याच्च द्वादशाहविकारत्वम्। अतएव गवामयनादौ द्वाभ्यां सोमावधतीत्यादिना द्वादशोपसत्त्वानुवादो विध्यन्तरस्तुत्यर्थः सङ्गच्छते। स्थिते च द्वादशाहविकारत्वे प्रथमोत्तमौ वर्जयित्वा द्वादशाहस्यैव प्रवृत्तिरिति वक्ष्यते।

तथापि सत्रेषु सत्रात्मकस्याहीनेष्वहीनात्मकस्य द्वादशाहस्या-वान्तरसादृश्यादित्यपि वक्ष्यते। सत्रेष्वपि यानि संवत्सरसाध्यानि सत्राणि तेषु संवत्सरसत्त्वसामान्यादयनशब्दवत्त्वसामान्याच्च संवत्सर-नियमादिधर्मलाभाय गवामयनस्य विध्यन्तः। अतएव गवामय-नान्तर्गतमहाव्रतिकं पञ्चय उपगायन्तीति धर्मं विध्यन्तरस्तुत्यर्थं संवत्सरसत्रान्तरेऽनुवदति।

ये तु सात्वताः सायस्का इत्येवं एकसंज्ञायोगिनो यागास्ते सञ्जातरूपनिकायययोगान्निकायिन उच्यन्ते। तेषां य एवैकोधर्म-वान् तस्याधर्मकेषु प्रवृत्तिः। एकसंज्ञायोगित्वसादृश्यात्। न चात्र

नाम्नैवातिदेशः। सर्वेष्वपि मुख्यत्वेन तदसम्भवात्। एकत्र मुख्यस्य हि नाम्नोऽपरत्र गौणत्वे नामातिदेशः। न तु सर्वत्र प्रवृत्तिनिमित्तसत्त्वेन मुख्यत्वेऽपि। न चैवं प्रायणीयस्थलेऽप्येकसंज्ञायोगादतिदेशापत्तिः। तस्य प्राथम्यनिमित्तार्थत्वेन द्वादशाहिकद्वितीयाहधर्मदर्शनेनानतिदेशकत्वात्। अतएव प्रयोजनान्तररहित एवैकसंज्ञायोगोऽतिदेशसाधकः।

अत्र च, य एव धर्मवांस्तस्याधर्मकेषु प्रवृत्तिः। स पूर्वो वा उत्तरो वा, युक्तिसाम्यात्। प्रायशः पूर्व एव तादृश इति सूत्रादौ तथोक्तिः। अतएव पूर्वपूर्वस्य किञ्चित् किञ्चिदधिकधर्मवत्त्वे उत्तरोत्तरेषु प्रवृत्तिः। अतएव पूर्वस्मिन् साहस्रे सहस्रं विधायोत्तरस्मिन् यावदस्य सहस्रस्योत्तरा गौः समाहिता भवति तावदस्मात्लोकादसौ लोक इति सहस्रं दक्षिणां दर्शयति। साद्यस्क्रे च पूर्वस्मिन् साण्डं सोमक्रयणं विधायोत्तरस्मिंस्तत्प्राप्तौ स्त्री गौः सोमक्रयणी व्यावृत्ता ह्येषां स्यधिंतेत्यनेन स्त्रियोविधानं स्यधिंताव्यावृत्त्यनुवादश्च सङ्गच्छते ॥ ८ ॥ १ ॥ २ ॥*

कर्मणः ॥ एवं प्रकृतिविशेषे निरूपिते फलनियमकर्त्तृसमुदायांशे तेषां न प्रकृतित्वमतस्तेषामनतिदेशः। तथा हि प्रकृतिफलं तावत् प्रकृतेरनतिदेशादेव नातिदिश्यते। न हि प्रकृतिरप्यतिदेष्टुं शक्या। विकृतिभावनाया विकृतिकरणेनैव निराकाङ्क्षत्वात्। न च सौर्यादिवाक्ये द्रव्यदेवतामात्रविशिष्टभावनाविधौ कृते सादृश्येन

---

* भाष्यकारेणात्र दश अधिकरणानि लिखितानि।

प्राकृतभावनोपस्थितौ तत्सम्बन्धिकरणस्यैव प्रयाजादिवदतिदेशोप-
पत्तिरितिवाच्यम्। अनुमितिसामग्र्या बलवत्त्वेन सूर्यादिदेवतया
यागानुमानस्याऽऽवश्यकतया शाब्दबोधे विजातीययागस्यापि
भावनाविशेषणतया विधेरावश्यकत्वेन करणाकाङ्क्षाऽभावादतिदेशा-
नुपपत्तेः।

न च तथापि तद्वैजात्ये आग्नेयभेदकल्पने गौरवात्तद्यागे आग्ने-
यत्वापत्तिः। विनिगमनाविरहसहकृतविधिपुनःश्रवणेन वैजात्यानां
भेदसिद्धेः। अन्यथाऽऽग्नेयेऽपि सौर्यत्वापत्तौ सूर्यादीनां साङ्कर्या-
पत्तेश्च। अतः सौर्यादीनां भिन्नानामेव करणानां लाभाच्च तेषा-
मतिदेश इति सिद्धम्। अतश्च तदभावाच्च तज्जन्यफलातिदेशः। न
च तदभावेऽप्यपूर्ववदिकृतेः फलाकाङ्क्षाऽस्ति। ब्रह्मवर्चसादिश्रुतफलेनैव
निराकाङ्क्षत्वात्।

यद्यपि विश्वजिदादौ न फलश्रवणं, तथापि न तदतिदेशः।
स हि अङ्गातिदेशकेन प्रकृतिवच्छब्देन भवेत्, भिन्नेन वा? नाद्यः।
एकेनैव प्रकृतिवद्विकृतिः कार्येतिवाक्येन विकृत्युद्देशेनाङ्गविधानं
फलोद्देशेन विकृतिविधानमिति वैरूप्यापत्तेः। यद्यपि च प्रकृति-
वच्छब्दमात्रस्य विकृतिविधिवाक्यशेषत्वकल्पनया अंशत्रयविशिष्ट-
विकृतिभावनाविधानेनावैरूप्यमित्याशङ्क्येत। तथाप्येकप्रकृतिवच्छब्द-
मात्रस्याङ्गांशे विधेयसमर्पकत्वं फलांशे उद्देश्यसमर्पकत्वमिति वैरूप्या-
पत्तिस्तदवस्थैव। नान्यः। स्वविध्युपस्थापितविश्वजिन्न्यायेनैव
फलकल्पनोपपत्तावतिदेशकल्पने प्रमाणाभावात्। अतो न
फलस्यातिदेशः।

नियमो निमित्तम्। तस्य तु विकृतिभावनया अनपेक्षितत्वा-देवानतिदेशः। न हि निमित्तमङ्गं, येन प्रयाजादिवदतिदेशो-भवेत्। प्रमाणाभावात्कारकत्वाभावाच्च न तस्याङ्गत्वम्। एवं सत्यपि यदि प्रकृतिरतिदिश्येत ततो भेदनवदिकृतावेव निमित्तसन्निपाते नैमित्तिकं विकृत्यङ्गतया प्रकृत्यनुष्ठानं प्रसज्येत। भेदनहोमानु-ष्ठानवत्। न त्वेतदस्ति। सर्वथा न निमित्तातिदेशो नैमित्तिकत्वं वा विकृतेः।

कर्त्ता अधिकारी। तस्यापि प्रकृतावनङ्गत्वात्। अतश्च तद्वि-शेषणानां स्वर्गकामत्वाहिताग्नित्वादीनामनतिदेशः। अतएव स्वप-तीष्ट्यादावाहिताग्नित्वस्यानतिदेशः। राजत्वादेस्तु कर्त्तृविशेषणत्वा-त्तस्य च प्रकृतावङ्गत्वाद्विकृतावतिदेश इष्ट एव। न हि तत्प्रकृतावधि-कारिविशेषणम्। अधिकारिणः शाब्दविधिबोधितत्वपक्षे* उद्देश्य-विशेषणस्य राजत्वादेरविवक्षापत्तेः। वस्तुतस्तु प्रथमापेक्षितत्वेन स्वारा-ज्यकामपदस्य फलपरत्वादधिकारिपरत्वानुपपत्तेरधिकारी आर्थि-कविधिबोध्य एवेति तत्र न शाब्दस्य राजत्वादेरन्वयसम्भव इति राजत्वादेः कर्त्तृविशेषणत्वमेव। अत एवाहिताग्नित्वादेर्यौक्तिकस्या-र्थिकेऽधिकारिविधौ विशेषणत्वकल्पनम्। याज्ञिकास्तु राजत्वादे-रधिकारिविशेषणत्वमङ्गीकृत्यानतिदेशं मन्यन्ते।

समुदायोऽग्नीषोमीयादिप्रधानान्तरसाहित्यम्। तस्य प्रकृता-वङ्गत्वेऽपि परप्रयुक्ताग्नीषोमीयादिप्रतियोगिकत्वात्तदभावे विकृतौ नातिदेशः॥ ८॥ १॥ ४॥

* शाब्दविधिबोध्यत्वपक्षे,— इति सो. पुस्तके पाठः।

गुणकामेषु॥ ये प्रकृतौ गोदोहनादिगुणजन्याः कामास्तेषाम-मङ्गत्वादनुपकारकत्वाच्च यद्यपि नातिदेशस्तथापि तज्जनकीभूत-गोदोहनादिगुणानां प्रणयनोपकारकत्वेनातिदेशे विकृतावपि काम-नायां सत्यां फलोत्पत्तौ न किं चिद्बाधकम्। न चाङ्गमेव विकृतावतिदेष्टव्यमिति नियमे प्रमाणमस्ति। करणोपकार-साकाङ्क्षायाविकृतिभावनायास्तज्जनकापेक्षायामुपकारकमात्रस्यैवाति-देशात्। न हि विकृतिभावनाऽङ्गमपेक्षते। प्रमाणाभावात्। अतः खादिरत्वादिवदेव गोदोहनादीनामप्यतिदेशः फलोत्पत्ति-श्चेति प्राप्ते।

सत्यम्। विकृतिभावनोपकारकमेवापेक्षते, तथापि सादृश्यात् प्रकृतिचोदना तदर्थं एव वा प्रथमत उपतिष्ठते। पश्चाच्च तदन्वित-मुपकारकम्। तदच चोदनार्थभूतायां प्रकृतिभावनायां यदन्वितं, तदतिदिश्यते। अनन्वितस्योपस्थित्यभावेनातिदेशायोगात्। अन्वितं चापशुकामप्रयोगे चमसविशिष्टं प्रणयनम्। पशुकामप्रयोगे प्रण-यनमात्रम्। तत्प्रयोगे प्रणयनस्य परप्रयुक्तगोदोहनोपजीवित्वेन द्रव्यानाक्षेपकत्वेन स्वरूपेणैव प्रधानभावनान्वयात्। अङ्गमेव प्रधान-भावनायामन्वेतीत्यभिप्रायेण तस्यैवातिदेश इति प्रवादः। अतश्च फलार्थगुणानामनतिदेशः।

न चातिदेशाभावेऽप्याश्रयस्य प्रणयनस्य विकृतावपि सत्त्वात्तत्रैव कामनायां सत्यां गोदोहनानुष्ठानोपपत्तिः। प्रकरणपाठवैयर्थ्या-पत्तेः। गुणफलसम्बन्धविधेराश्रयप्रयोजकत्वशक्तिकल्पनागौरवप्रस-ङ्गाच्च। प्रणयनमात्रस्याश्रयस्याश्रयत्वानुपपत्तेरवश्यं दर्शपूर्णमासापूर्व-

साधनीभूतप्रणयनत्वेनैवाश्रयत्वात् । विकृतौ तदभावेन गोदोहनानुष्ठानानुपपत्तेः । अतएव खादिरत्वादेः संयोगपृथक्त्वन्यायेन क्रत्वर्थस्यापि सत्त्वादतिदेशोपपत्तावपि अग्नीषोमीयापूर्वसाधनीभूतयूपाभावान्न तेन वीर्यादिफलोत्पत्तिः ।

भाष्यकारस्य तु एतादृशविषये फलोत्पत्तिं मन्यमानस्याभिप्रायं न विद्मः । यत्र तु नाश्रयापेक्षा विजातीयप्रस्तरप्रहरणत्वादिनैव वायुरादिफलं प्रति साधनत्वम् । वायुरादिप्रकाशकमन्त्रस्य च स्वप्रकाश्यफलजनकत्वेन प्रहरणाङ्गत्वम् । तत्र भवत्येव विकृतावपि तस्मात् फलोत्पत्तिः ॥ ८ ॥ १ ॥ ५ ॥

एककर्मणि ॥ सौर्यादिरौषधद्रव्यकत्वैकदेवताकत्वाभ्यां आग्नेयविकार इति वक्ष्यते । आग्नेयवाक्ये आग्नेयद्वयं पौर्णमास्यमावास्याकालकमित्युक्तं कौस्तुभे पौर्णमास्यधिकरणे । सौर्यस्य विनिगमनाविरहादुभयविकार इत्यप्यविवादम् । सौर्यं च य इष्येति वचनादैकस्थिकः पौर्णमास्यमावास्याकालः । तदृचाग्नेययोः किं पौर्णमासीकालीनसौर्यप्रयोगे पौर्णमासीकालीनाग्नेयस्यामावास्याकालीनसौर्यप्रयोगे चामावास्याकालीनस्य व्यवस्थितं प्रकृतित्वमुताव्यवस्थितविकल्पेनेतिचिन्तायाम् ।

तत्तत्कालत्वरूपावान्तरसादृश्यात् व्यवस्थितम् । एवं च चतुर्होत्रा पौर्णमासीमभिमृशेत्पञ्चहोत्राऽमावस्यामितिविहिततत्तदङ्गमन्त्रयोरपि व्यवस्था । अत्र हि पौर्णमास्यादिसंज्ञकप्रधानसन्निधिविरेव पौर्णमास्यादिपदेन लक्षयित्वा तदुद्देशेन मन्त्रमात्रविधिः । अभिमर्शनं तु आज्यानि हवींष्यभिमृशतीति वाक्यान्तरप्राप्तं आश्रयत्वे-

नानूद्यते इति साधितं तृतीये। अतश्च मन्त्रयोरपि व्यवस्थोपपत्तेः प्रकृतिव्यवस्थेति प्राप्ते।

भावनायाविजातीययागत्वावच्छिन्नस्य वाऽनुग्राहकरूपेतिकर्त्तव्यताकाङ्क्षा न तु प्रयोगविशेषस्य। अतश्चैकजातीयस्य सौर्यस्य वैकल्पिकोभयकाङ्क्षत्वादेकल्पिकोभयविकारत्वावगतेरव्यवस्थयैव तत्तदाग्नेयप्रकृतिकत्वं मन्त्राणामव्यवस्थेति सिद्धम्।

यत्तु पार्थसारथिना वार्त्तिककारस्याद्याग्नेयैकत्वमभ्युपगम्य मन्त्रयोर्दृष्टार्थत्वेन विकल्पादेकस्मिन्नाग्नेये प्रधानान्तरसाहित्यानुरोधेन प्रकृतौ व्यवस्थायामपि विकृतौ तदभावेन व्यवस्थाकारणाभावादव्यवस्थितविकल्पोमन्त्रयोरिति सिद्धान्तितम्। तन्मन्त्रविकल्पचिन्तायाद्वादशप्रसक्ततया ऽतिदेशविचाराभावेनाध्यायसङ्गत्यभावापत्तेराग्नेयभेदस्य च स्थापितत्वेनैक्यानुपपत्तेरुपेक्षितम्॥ ८॥ १॥ ६॥

लिङ्ग॥ इष्टिषु दर्शपूर्णमासयोः प्रवृत्तिरित्युक्तम्। तत्रापि सौर्यादिषु औषधद्रव्यकत्वविशिष्टैकदेवताकत्वरूपविशेषसादृश्यादाग्नेयविकारत्वम्। अत्र च सान्नाय्य*स्यैकदेवताकत्वेऽपि औषधद्रव्यकत्वाभावादाद्यं विशेषणम्। अग्नीषोमीयादेरौषधद्रव्यकत्वेऽप्यनेकदेवताकत्वादपरम्।

अत्र यद्यपि एकदेवताकत्वं नाम नैकदेवतात्वकत्वम्। अग्नीषोमीयादावपि व्यासज्यवृत्तेर्देवतात्वस्यैकत्वेनातिप्रसङ्गात्। नाप्येकदेवताकाधिष्ठानकत्वम्। देवतात्वस्य शब्दनिष्ठत्वेन देवतात्वीयरूप-

* सान्नाय,— इति सो॰ पुस्तके पाठः।

सम्बन्धेन प्रत्येकाक्षराणामेव तदधिष्ठानतया आग्नेयेऽप्यव्याप्तेः। पर्याप्तिसम्बन्धावच्छिन्नाधिष्ठानत्वविवक्षायामग्नीषोमीयेऽप्यतिव्याप्तेश्च। सम्बन्धद्वयातिरेकेण पदमात्राधिष्ठानकत्वस्य वक्तुमशक्यत्वाच्च। तथापि देवतात्वाश्रयप्रतिपाद्यार्थैकत्वमेवैकदेवताकत्वम्। एकत्वमेकसंख्याकत्वम्।

अर्थस्य देवतात्वपक्षे तु देवतात्वाधिष्ठानैकत्वमेव तत्। अस्ति चेदमाग्नेये सौर्ये च। प्रथमातिक्रमे कारणाभावेनैकवचनान्तेनैव तद्धितविग्रहात्। अग्निमेव स्वेन भागधेयेन समर्द्धयति, असुमेवादित्यꣳ स्वेन भागधेयेनोपधावतीत्याद्यर्थवादाच्च। अग्निर्मूर्धा, उदुत्यं जातवेदसमिति मन्त्रवर्णाच्च। अग्नीषोमीयैन्द्राग्नयोस्तु तदभावादनेकदेवताकत्वम्। अतएव मारुतं सप्तकपालमित्यादौ, मरुतो यस्य हि क्षये इति मन्त्रवर्णादनेकदेवत्यत्वावगतेः सत्यपि पदैक्ये नाऽऽग्नेयविकारत्वम्। अग्नये क्षामवते चरुमित्यादौ च सत्यपि पदभेदे प्रमाणान्तरेणार्थैकत्वावगमादाग्नेयविकारत्वम्। अनेकदेवताकेषु तु अग्नीषोमीयैन्द्राग्नयोः। तत्राप्यग्नीषोमदेवत्यस्य सोमपदघटितानेकदेवत्यस्य चतुरक्षरानेकदेवत्यस्य वाऽग्नीषोमीयविकारत्वमेव। इन्द्राग्नीदेवत्यस्येन्द्रपदघटितानेकदेवत्यस्य त्र्यक्षरानेकदेवत्यस्य चैन्द्राग्नविकारत्वमेवेति व्यवस्था। तथैन्द्राग्ने शाखाभेदेनैकादशकपालत्वद्वादशकपालत्वयोर्विकल्पाद् द्वादशकपालायां तदधिकसंख्याककपालायां वा विकृतावैन्द्राग्नविकारत्वमेव। तन्न्यूनसंख्यककपालायामष्टाकपालभिन्नायां तु विकल्प एव व्यवस्थापकसामान्याभावे। अष्टाकपालकायां तु सत्यप्यनेकदेवताकत्वे इन्द्रघटितसादृश्यस्य बलवत्त्वादाग्नेयविकारत्वमेवेत्या-

णूक्तम्। आज्यद्रव्यकायामुपांशुयाजस्य। दधिपयोरूपसांनाय्यद्रव्यकायां तत्तद्रव्यकस्येत्यादिविशेषतः प्रकृतित्वं बोध्यम्॥ ८॥ १॥ ७॥

विप्रतिपत्तौ॥ एवं सादृश्यनियामकत्वे निरूपितेऽधुना तयोर्विरोधे बलाबलञ्चिन्त्यते। तथापि द्रव्यघटितदेवताघटितसादृश्ययोर्यत्र विप्रतिपत्तिर्यथा। ऐन्द्रः पुरोडाशः आग्नेयं पय इत्यादौ। तत्र कस्य बलवत्त्वमिति चिन्तायाम्। देवतायाः प्रथमोपस्थितत्वेन मुख्यत्वात् प्रधानत्वाच्च तत्सादृश्यमेव बलवत्। इन्द्र एवैनमिन्द्रः प्रजया पशुभिश्च तर्पयतीत्याद्यर्थवादवशाद्धि यागोदेवताराधनार्थः। आराधिता च सा फलं ददातीति तस्याः प्रधानत्वम्। देवतासादृश्यस्य यद्यपि निरुक्तैकदेवताकत्वरूपं द्रव्यसादृश्याविरोधि। तथापि समानशब्दार्थकत्वरूपं तद्विरोधीति तस्य बलवत्त्वमितिप्राप्ते।

प्रथमोपस्थितत्वेऽपि कर्मविध्युत्तरकालमतिदेशकल्पनात्तदा च द्रव्यस्यैव प्रत्यासन्नत्वेन शीघ्रोपस्थितेस्तत्सादृश्यस्यैव बलवत्त्वम्। यागो हि वृद्धव्यवहारात् देवतोद्देशविशिष्टद्रव्यत्यागरूपः। तत्र द्रव्यस्य प्रधानभूते त्यागे विशेषणत्वं, देवतायास्तु विशेषणीभूते उद्देशे। अतो द्रव्यं यागप्रत्यासन्नम्। यद्यपि च देवताप्रसादस्यैवार्थवादवशाद्यागस्य फलसाधनत्वे द्वारत्वं कल्प्यते। तथापि देवतायाः शाब्दबोधे यागं प्रति द्रव्यं प्रति वा प्राधान्ये प्रमाणाभावात् प्रत्युत द्रव्यस्यैव पार्ष्टिकान्वये विशेष्यत्वेन प्राधान्यावगतेर्न देवतासामान्यस्य बलवत्त्वाशङ्का। वस्तुतस्तु न देवताप्रसादस्य द्वारत्वमिति जैमिनिमतं वक्ष्यत एव। अतोऽन्तरङ्गत्ववशादेव द्रव्यसादृश्यस्य बलवत्त्वम्।

एवं च धर्मानुपदेशोपष्टम्भेन सङ्गच्छते। इतरथा पुरोडाशादौ शाखाच्छेदादीनां बाधापत्तेः। एवमन्यत्राप्यन्तरङ्गत्वादिना सर्वत्र सादृश्ययोर्बलाबलं द्रष्टव्यम्। यत्र तु न्यायेनान्यादृशं बलाबलं, कल्पसूत्रकाराणां चारांशान्यादृशमस्त्रत्र तन्मूलभूतश्रुतिरूपवचनातिदेशेन न्यायकल्प्यातिदेशस्य बाध इत्यपि द्रष्टव्यम्। अतएव सौम्यचरित्यादौ शब्दार्थगतसमानत्वरूपसादृश्यस्य निरूढैकदेवताकत्वरूपसादृश्यापेक्षया अन्तरङ्गत्वेऽपि नाग्नीषोमीयविकारत्वमपि त्वाग्नेयविकारत्वमेव। एवमाग्नेयएकादशकपालइत्यादौ देवतासामान्यस्य कपालसंख्यासादृश्याद्यपेक्षया अन्तरङ्गत्वेऽपि नाग्नेयविकारत्वमपि त्वग्नीषोमीयादिविकारत्वमेव। केचित्त्वेतादृशविषये कपालैकादश-त्वादीनां द्रव्यनिष्ठसाधनतावच्छेदककोटिप्रविष्टत्वात् द्रव्यसादृश्य-घटकत्वमेवेत्यग्नीषोमीयविकारत्वं समर्थयन्ते ॥ ८ ॥ १ ॥ ८ ॥

हिरण्य ॥ द्रव्यनिष्ठसादृश्ययोः परस्परविरोधे तु देवतासादृश्यो-पष्टम्भस्यापि द्रव्यसादृश्यस्य श्रौतलिङ्गोपष्टम्भद्रव्यसादृश्यापेक्षया दुर्बलत्वम्। यथा प्राजापत्यं घृते चरुं निर्वपेच्छतकृष्णलमायुष्काम इत्यत्र कृष्णलानान्दीप्तिमत्त्वलक्षणतेजस्त्वसादृश्यस्य प्रजापतिदेवताकत्वसादृश्योपष्टम्भस्यापि कठिनत्वापरपर्यायविशदत्वसादृश्यापेक्षया दुर्बलत्वम्। तेन नायं यागस्तेजस्त्वसादृश्यादुपांशुयाजविकारोऽपि तु कठिनत्वसादृश्यादाग्नेयविकार एव। चरुशब्दप्रयोगात्। घृते श्रपयतीति श्रपणविधानाच्च। यद्यपि नायं विकृत्यभावेन मुख्य-चरुः। तथापि श्रपणे चरुशब्दानुवादचरुधर्मयोगादुपपद्यत इति श्रौषधधर्मप्रापकं भवति लिङ्गम्।

न चाग्नेये चरोरभावादाग्नेयधर्माणां चरुगतत्वाभावेन कथं चरुशब्दस्तत्रौषधधर्मप्रापक इति वाच्यम्। सौर्यचरोराग्नेयविकारत्वे-नाग्नेयधर्माणामपि चरुगतत्वाच्चरुशब्दस्य तत्प्रापकत्वसम्भवात्। एवं श्रपणवाक्येऽपि यद्यपि न श्रपणानुवादेन घृतविधिः। श्रपण-स्याग्नेयविकारत्वेऽपि विक्लृप्तिरूपप्रयोजनाभावेन बाधात्। घृत-स्योत्पत्तिवाक्ये प्राप्तत्वाच्च। तथाप्यग्निसंयोगमात्ररूपं श्रपणं मत्वा अपूर्वतया वा प्रतिप्रसवविधया विधीयते। तच्च घृतविशिष्टं शुद्धं वेत्यन्यदेतत्। न विशिष्टविधित्वमित्यत्र नियामकाभावात् उत्प-त्तिवाक्ये घृतस्य परम्परासम्बन्धेन यागान्वये तस्य विलम्बोपस्थिति-कत्वादत्रैव विशिष्टविधिरिति तु युक्तमुत्पश्यामः।

यद्यपि च श्रपणस्योपांशुयाजविकारत्वेऽपि प्रतिप्रसवविधित्वं युज्यत एव। आज्येऽप्यग्निसंयोगसद्भावात्। तथापि द्रव्यान्तरसंयोग-स्यात्यन्ताप्राप्तस्योपांशुयाजविकारत्वे विधेयत्वापत्तेराग्नेयविकारत्वे द्रव्यान्तरस्य जलस्य प्राप्तौ तत्र घृतविधाने लाघवमिति लिङ्गोप-पत्तिः। एतदभिप्रायेणैव वा भाष्यकारेण तस्मिंस्तु श्रपणश्रुतेरिति सूत्रस्य घृतद्रव्यकत्वसादृश्यादुपांशुयाजविकारत्वमाशङ्क्य घृतस्याधि-करणत्वश्रुतेः प्रदेयत्वाभावादिति व्याख्यानान्तरं कृतम्। सर्वथा श्रौतलिङ्गोपष्टम्भस्य सादृश्यस्य बलवत्त्वाद्धिरण्ययाग औषधविकार एव। एवं च यत्र हिरण्ययागान्तरे लिङ्गाभावस्तत्र देवतासादृश्या-त्तदभावेऽपि आज्यधर्माणां भूयसामनुग्रहात्तेजस्त्वित्वसादृश्येनाज्य-विकारत्वमेव। चरुशब्दस्य वा स्थालीपुलाकन्यायेन गमकत्वादौषध-विकारत्वम्। कृष्णलेष्टिविकारत्वं वा ॥ ८ ॥ १ ॥ ८ ॥

मधूदकम् ॥ चिनेष्टावनेके यागाः इत्युक्तं चित्राधिकरणे कौस्तुभे। तत्र दधिघृतपयोधानातण्डुलयागानामाग्नेयवैव प्रकृतिः। मधूदकयोस्तु वर्णसाम्यादुपांशुयाजविकारत्वम्। प्रकृतोदाहरणे देवतासामान्यस्याधिकत्वाच्च। न तु स्वाभाविकद्रवत्वसादृश्यात्पयोयागविकारत्वम्। सत्यपि सादृश्यद्वये लिङ्गविशेषस्य निर्णायकत्वाभावे बहुतराव्यधर्मानुग्रहस्यैव नियामकत्वात्। नैमित्तिकद्रवत्वस्याज्येपि सत्त्वाच्च। अतस्य सर्वयागानामेकफलकत्वेनैकतन्त्रत्वाद्भूयसामनुग्रहाय त्रयाणां मधुघृतोदकानामुपांशुयाजधर्मास्तत्रानुष्ठीयमानविरुद्धधर्मविषये कार्याः। आवृत्त्यानुष्ठीयमानद्रव्यसंस्कारविषये तु तत्तद्यागीयधर्मास्तत्तद्द्रव्येषु कार्याः ॥ ८ ॥ १ ॥ ९ ॥

इति श्रीखण्डदेवकृतौ भाट्टदीपिकायां
अष्टमस्य प्रथमः पादः ॥

## अथ द्वितीयः पादः।

वाजिने॥ वाजिनयागस्यामिचाऽनुनिष्पन्नवाजिनप्रतिपत्तिकर्मणोऽप्यङ्गापेक्षायां किं सौमिकातिदेश उत दार्शिक इति चिन्त्यते। सौत्रामण्यङ्गदेवतासंस्कारार्थसुराग्रहेषु चैवमेव चिन्ता। तत्र सोमोवे वाजिनं सुरा सोम इत्यसोमे सोमशब्दः सोमधर्मातिदेशार्थः। न चोपशयोयूपो भवतीतिवदर्थवादस्थलादनतिदेशकत्वम्। तद्वदिह सिद्धसादृश्याभावेन नामातिदेशावश्यकत्वात्।

अतएवानुवषट्कारमन्त्रौ समुपहूय भक्षणमुभयत्र दर्शयति। सुरायां सीसेन क्रयणं, कुवलसक्तुभिः श्रयणं, एका पुरोरुक्, एका याज्या, उपयामेतिमन्त्रो गृहीत्वासादनं, क्षौमे वाससुपनहनं दर्शयति। ग्रहशब्दस्यैवं सति सुतरामुपपद्यत इति प्राप्ते।

आर्थवादिकस्य सोमशब्दस्य प्रकृष्टफलवत्त्वरूपसिद्धसादृश्येनोपपत्तौ वाक्यभेदापादकविधिपरत्वे प्रमाणाभावात्। ग्रहशब्दस्य प्रायणीयवद्ग्रहणस्यौपदेशिकत्वेनैवोपपत्तेर्लिङ्गानाञ्च वाचनिकतयाप्युपपत्तावप्रतिबद्धेन चोदनालिङ्गातिदेशेन दार्शिकविध्यन्त एव। तत्रापि वाजिने पशुप्रभवत्वद्रवत्व*सादृश्यात्पयोयागविध्यन्तः। सुरायां पौरोडाशिक औषधद्रव्यकत्वात्। अतएव शष्पैरेव दीक्षणीयामाप्नोतीति दीक्षणीयाप्तिवचनं सङ्गच्छते। इतरथा हि तस्याः प्रत्यक्षत्वेन प्राप्तिवचनेन स्तुतिरसङ्गतेव स्यात्। तथा नैतेषां पुरोडाशा विद्यन्ते,

---

* द्रवत्व,—इति नास्ति आदर्शपुस्तके।

शष्पपुरोडाशा एते पशव इति शष्पेषु पुरोडाशशब्दानुवादस्तद्गुणकत्वे सङ्गच्छते ।

यद्यपि चैतेषां शष्पयागान्तराणां वार्त्तिककारमते पशुपुरोडाशकार्यापन्नत्वस्य दशमे वक्ष्यमाणत्वात् स्थानापत्त्यैव पुरोडाशशब्दोपपत्तिस्तथापि स्थानापत्त्यापि तावत् पशुपुरोडाशधर्मप्राप्तेर्लिङ्गोपपत्तिः । वस्तुतस्तु । अङ्गापेक्षायामकृघटितसादृश्यस्यैव पुरःस्फूर्त्तिकत्वेन स्थानापत्त्यतिदेशापेक्षया चोदनालिङ्गातिदेशस्य बलवत्त्वादौषधद्रव्यकत्वेन सर्वप्रकृतिभूतदर्शपूर्णमासविकारत्वमेव । अतएव,

"एषामसम्भवे कुर्यादिष्टिं वैश्वानरीं बुधः" ।

इत्यादौ वैश्वानर्यादीष्टीयेत्यादौ च न ज्योतिष्टोमादिधर्माः । यदा तु दाशमिकसूत्रभाष्यकाररीत्या प्राकृतपशुपुरोडाशयाग एव सुरादिद्रव्यान्तरमात्रविधिरित्याश्रीयते । तदा सोमादिशब्दस्य नामातिदेशनिराकरणमात्रार्थमिदमधिकरणम् । न तु चौषधद्रव्यकत्वलिङ्गातिदेशसिद्ध्यर्थम् । एतदभावेऽपि पशुपुरोडाशस्य दर्शपूर्णमासविकारत्वसिद्धेरिति ध्येयम् ॥ ८ ॥ २ ॥ १ ॥

पशुः ॥ दैक्षः पशुर्दर्शपूर्णमासविकार इत्युक्तम् । तत्रापि किमग्नीषोमीयपुरोडाशविकार उत साम्नाय्यविकार इति चिन्तायां, घनत्वसादृश्यात् पुरोडाशविकारः । न च पशुप्रभवत्वसादृश्यस्य द्रव्यगतस्य साम्नाय्ये सत्त्वाद्विनियामकाभावः । घनत्वस्य लिङ्गोपष्टब्धत्वात् । अग्नयेत्वौषधाभ्योऽग्नीषोमाभ्यां त्वा जुष्टं प्रोक्षामीति पशुं प्रोक्षतीति हि प्रोक्षणं पुरोडाशधर्मः । तथा पशुं पर्यग्नि करोतीति पर्यग्निकरणं पुरोडाशविकारत्वे लिङ्गम् । न च पशुप्रभवत्वसादृश्य-

स्यापि उखादर्शनरूपलिङ्गोपष्टम्भत्वान्नियामकाभावः। तथात्वेऽपि देवतासादृश्यस्यैवाग्नीषोमीयविकारत्वे गमकत्वादिति प्राप्ते।

देवतासामान्योपष्टम्भस्यापि द्रव्यसादृश्यस्यान्यथासिद्धलिङ्गोपष्टम्भत्वेनानन्यथासिद्धलिङ्गोपष्टम्भद्रव्यसादृश्यापेक्षया दौर्बल्यात् साक्षाय्यविकार एव पशुः। तथा हि नात्र प्रोक्षणानुवादेन मन्त्रो विधीयते। येनेदं लिङ्गं भवेत्। तस्य तु लिङ्गादेव प्राप्तत्वात् प्रोक्षणभावनैवात्रापूर्वा विधीयत इति विपरीतसाधकत्वम्। पर्यग्निकरणं तु प्रदेयपुरोडाशधर्मत्वेन प्रकृतौ क्लृप्तम्। नेह प्रदेयप्रकृतिभूतपशुसंस्कारकतया दृश्यमानं प्राकृतम्। अपि त्वपूर्वमेवेति न तदपि लिङ्गम्। अतो घनत्वसादृश्यं न लिङ्गोपष्टम्भम्। यदि पशुरुखायां पच्यमानः स्कन्देदिति उखादर्शनं तु अनूद्यमानत्वादनन्यथासिद्धं लिङ्गम्। अतः तदुपष्टम्भं पशुप्रभवत्वमेव बलीयः॥ ८॥ २॥ २॥

दध्नः॥ तत्रापि दधिविकारः पयोविकारो वेति चिन्तायां, घनत्वसादृश्याद्दधिविकारत्वमेव। न च साक्षात् पशुप्रभवत्वसादृश्येन पयोविकारत्वशङ्का। कारणत्वस्य व्याप्तिरूपतया अतीन्द्रियस्यानुमानिकत्वेन प्रत्यक्षगम्यघनत्वापेक्षया दौर्बल्यादितिप्राप्ते। चर्द्यादीनां पयसश्चैकदिनान्तरितानां विकारदर्शनादेकदिनस्थायित्वसादृश्यं स्वतोगतिमत्त्वसादृश्यं च प्रत्यक्षमेवेति तत्सहकृतेन साक्षात् पशुप्रभवत्वेनैकस्य घनत्वस्यैव बाधात्पयोविकारत्वमेव॥ ८॥ २॥ ३॥

आमिक्षा॥ आमिक्षा तावत्कार्यान्तरमपि तु दधिपयोऽन्यतररूपमिति साधितं चतुर्थे। अतश्च तदन्यतरविकार इति तावदवि-

वादम्। तत्रापि तु विशेषचिन्तायां, तप्ते पयसीत्यत्र द्वितीयानिर्दिष्टदध्न एव सा वैश्वदेवीति तच्छब्देन परामर्शो न तु सप्तम्यन्तपदनिर्दिष्टस्य पयसः। गुणभूतत्वात्। न चानयतेर्द्विकर्मकत्वात्पयसोव्याप्यमानत्वेन दध्यपेक्षयापि प्राधान्यावगतिः। द्विकर्मकधातुस्थले अधिकरणत्वादिकारकान्तराविवक्षायां कर्मकारकसम्बन्धमात्रविवक्षायां च सम्बन्धसामान्ये षष्ठीप्राप्तौ अकथितं चेति सूत्रेण कर्मसंज्ञाकरणात्। द्वितीयाविधानावगतावपि प्राधान्ये प्रमाणाभावात्। प्रकृते सप्तमीश्रवणेनाधिकरणत्वविवक्षावगतेर्द्वितीयकर्मप्रसक्त्यभावाच्च। अतश्च दधिरूपत्वादामिक्षायाः दधियागविकारत्वमेवेति लौकिकस्य पयसोऽधिकरणत्वमिति प्राप्ते।

मधुररसभूयस्त्वाद्दध्यभावेऽपि च अन्नान्तरेणामिक्षासम्पत्तेरन्वयव्यतिरेकाभ्यां शुषन्तां युष्मं पय इति मन्त्रवर्णाच्च पयस एवावस्थाविशेषापन्नस्यामिक्षापदवाच्यत्वावगतेस्तदनुरोधेन तच्छब्दस्यापि सप्तम्यन्तपदनिर्दिष्टपयःपरामर्शित्वस्यैवावगतेः पय एवामिक्षा। अतश्च तद्यागविकारत्वमेव। एवं च तप्ते पयसीत्यत्र सप्तम्या प्राधान्यलक्षणा, द्वितीयया च सक्तुन्यायेन करणत्वलक्षणेत्यपि ध्येयम्।

अवस्थाविशेषरूपामिक्षा च न तापं विनेति तस्यापि विवक्षा। यदि तु तापं विनाप्यामिक्षा लोके सम्भाव्यते, तदा न सप्तम्या प्राधान्यलक्षणापि। तप्तपयोधिकरणत्वविशिष्टदध्यानयनस्यैवावस्थाविशेषविशिष्टपयोरूपामिक्षोद्देशेन विधेयत्वात्। उद्देश्यवाचकपदकल्पनया च वाक्यार्थपूर्त्तिः। तस्यैव च तच्छब्देन परामर्शात् सुतरां लिङ्गोपपत्तिः। अधिकरणत्वस्यैव च दध्यानयनं प्रत्यङ्गत्वेऽपि पय-

होनाङ्गत्वं क्लृप्तप्रयोजनत्वादिति ध्येयम्। अतः आमिक्षाया अवस्थाविशेषविशिष्टपयोरूपत्वात्पयोयागविकारत्वम्। तेन पयस्येव प्रातर्दोहधर्माः, दधि तु लौकिकमेव संस्कारकम् ॥ २ ॥ ८ ॥ ४ ॥

सत्रमहीनश्च ॥ अहर्गणेषु द्वादशाहस्य प्रवृत्तिरित्युक्तम्। द्वादशाहे चास्ति सत्रत्वमहीनत्वं चेति धर्मद्वयम्। तत्रासीरन्, उपेयुरित्यादिचोदनाचोदिते सत्रत्वमखण्डोपाधिः। अनियतस्वामिके यजतिचोदनाचोदिते चाहीनत्वमखण्डोपाधिर्वृद्धव्यवहारात्। तत्तद्धर्मकत्वे निमित्ते च तत्र धर्मविशेषा विहिताः। तथान्येऽपि सत्रसंज्ञका अहीनसंज्ञकाश्चाहर्गणा अधर्मकाः समाम्नाताः। तत्र द्विविधेष्वपि द्वादशाहस्यैकस्य धर्मप्रवृत्तिः। अतोऽविरुद्धाः समुच्चीयन्ते विरुद्धाश्च विकल्प्यन्ते। न ह्यत्र द्वादशाहे भेदोऽस्ति। येनावान्तरसामान्यात्तत्तद्द्वादशाहवदित्यतिदेशवाक्यं कल्प्येत। भेदे प्रमाणाभावात्तु द्वादशाहवदित्येवातिदेशवाक्यकल्पनेऽव्यवस्थैव युक्तेत्येवं प्राप्ते।

सत्यपि द्वादशाहत्वेनैवातिदेशे सत्रत्वरूपनिमित्ताभावात्तन्नैमित्तिकाधर्मा नाहीने, अहीनत्वरूपनिमित्ताभावाच्च तन्नैमित्तिकाधर्मा न सत्रे प्रवर्तन्ते। भेदनाभाव इव होमस्तण्डुलयागादाविति फलतो व्यवस्थितं प्रकृतित्वम्। सत्रात्मकेष्वहर्गणेषु सत्रात्मकस्य द्वादशाहस्याहीनात्मकेष्वहीनात्मकस्येति। द्विरात्रादारभ्यैकादशरात्रान्तमहीनाः। द्वादशाह उभयात्मा। त्रयोदशरात्रादारभ्य सर्वे सत्रभूता एव। तथैवोक्तलक्षणसत्त्वात्। वृद्धव्यवहाराच्च। अतस्तेषु तेषु तत्तद्रूपस्य द्वादशाहस्य प्रवृत्तिः ॥ ८ ॥ २ ॥ ५ ॥

अन्यतरतोऽतिरात्रत्वात् ॥ पञ्चदशरात्रस्य कुण्डपायिनामयनस्य

च न सचत्वम्। यदन्यतरतोऽतिरात्रस्तेनाहीन इति श्रुत्या अन्यतरतोऽतिरात्रत्वस्याहीनलक्षणकरणादर्थादुभयतोऽतिरात्रत्वस्य सचलक्षणत्वेन पञ्चदशरात्रादौ अहीनलक्षणसत्त्वेन तदनुपपत्तेः। अतएव न सचाहीनयोर्भवदुक्तलक्षणं, न वैकादशरात्रान्तमेव शुद्धाहीनत्वम्। अतश्च पञ्चदशरात्रादौ अहीनात्मकद्वादशाहस्यैव प्रवृत्तिरिति प्राप्ते।

अहीनत्वाभावेऽपि प्राचुर्येणाहीनेऽन्यतरतोऽतिरात्रत्वादस्मिन्नपि पञ्चदशरात्रेऽन्यतरतोऽतिरात्रत्वेनाहीनत्वोपचारस्य स्तुत्यर्थत्वेनोपपत्तेरभियुक्तप्रसिद्ध्या निरुक्तलक्षणकस्यैव सचत्वादेरङ्गीकारात् पञ्चदशरात्रकुण्डपायिनामयनयोरपि सचत्वमेव। अतएव गृहपतिर्गृहपतिरिति गृहपतिशब्दः सचैकान्तवृत्तिः कुण्डपायिनामयने। अतः सचात्मकद्वादशाहप्रकृतित्वमेवानयोः॥ ८॥ २॥ ६॥

इति श्रीखण्डदेवविरचितायां
भाट्टदीपिकायामष्टमस्य द्वितीयः।

## अथ तृतीयः पादः ।



हविर्गणे ॥ आग्नावैष्णवमेकादशकपालं सारस्वतं चरुं बार्हस्पत्यं चरुं इत्यादिहविर्गणे क्रमसामान्यात् प्रथमतृतीययोः आग्नावैष्णवबार्हस्पत्ययोराग्नेयाग्नीषोमीयविकारत्वमिति प्राप्ते । क्रमसामान्यस्यामान्द्यस्यान्यापेक्षत्वेन विलम्बोपस्थितिकत्वादुत्पत्तिवाक्यगतदेवतासादृश्यस्यानन्यापेक्षत्वेन यागस्वरूपपरिचायकत्वेन च शीघ्रोपस्थितिकस्य बलवत्त्वात्तेनाग्नावैष्णवस्याग्नीषोमीयविकारत्वं, बार्हस्पत्यस्य चाग्नेयविकारत्वम् ॥ ८ ॥ ३ ॥ १ ॥

गणचोदनायां ॥ जनकसप्तरात्रे चत्वारि त्रिवृन्त्यहान्यग्निष्टोममुखानीति श्रुतम् । तत्र चतुर्ष्वप्यहःसु द्वादशाहिकदशाहान्तर्गतप्राथमिकस्य त्रिवृत्स्तोमकस्याह्नः प्रवृत्तिः । त्रिवृत्त्वलिङ्गात् । न तु क्रमसहकृतगणत्वसामान्येनान्यापेक्षेण दशाहान्तर्गतानामाद्यानां चतुर्णामह्नां प्रवृत्तिः । तत्तदहर्वृत्तित्रिवृत्त्वस्यान्यानपेक्षत्वेन बलवत्त्वादिति प्राप्ते ।

स्वर्गकामोजनकसप्तरात्रेण यजेतेति वचनेनोत्पन्नानां सप्तानां कर्मणां मध्ये चत्वार्यनूद्य त्रिवृत्त्वविधानेन त्रिवृत्त्वस्योत्पन्नशिष्टत्वेन दुर्बलत्वादुत्पत्तिशिष्टेन गणत्वेनैव प्रथमस्य प्रथममित्यादिक्रमसहकृतेन सप्तानामप्यह्नां द्वादशाहिकदशाहान्तर्गतसप्ताहविकारत्वम् ।

न च प्राप्तकर्मानुवादेन त्रिवृत्त्वविधिरग्निष्टोममुखत्वस्य च विधिरिति वाक्यभेदः । दशाहान्तर्गतचतुर्णां मध्ये प्रथमस्याग्निष्टोम-

संख्याकत्वेनाग्निष्टोममुखत्वस्य प्राप्तत्वात् । न चाद्येष्वेव चतुर्षु चिष्टुत्त्वविधौ प्रमाणाभावेनाग्निष्टोममुखत्वस्यापि विधिरावश्यक इति वाच्यम् । प्रथमातिक्रमे कारणाभावात्त्रयाणामन्येषां विध्यन्तरेण स्तोमविधानाच्चाद्येष्वेव चतुर्षु चिष्टुत्त्वप्राप्तेरिति भाष्यकाराभिप्रायः ।

वस्तुतस्तु चतुःसंख्याकोद्देशेन चिष्टुत्त्वविधौ योग्यतया चप्तस्वप्यहःसु चाद्येषु चतुर्षु स्तोचेषु चिष्टुत्त्वविध्यापत्तेरहर्मात्रोद्देशेन तद्विधौ च सर्वच तदापत्तेः चतुःसंख्याविशिष्टाहरुद्देशे च वाक्यभेदापत्तेरयमेव संख्याभिन्नचिष्टुत्त्वविशिष्टकर्मोत्पत्तिविधिः । चयाणां चान्येषां विध्यन्तरेण विधिः ।

सर्वेषां च फलवाक्येन सम्बन्धमाचकरणम् । एवं चोत्पत्तिवाक्ये चतुर्णाङ्गुणत्वप्रतीतेस्तस्योत्पत्तिगतत्ववत् चिष्टुत्त्वस्याप्युत्पत्तिगतत्वेन साम्येऽपि चिष्टुत्त्वस्याङ्गभूतस्तोचवृत्तित्वात् प्रधानवृत्तिगणत्वापेक्षया दुर्बलत्वेन गणत्वसादृश्येनैवाद्यानां चतुर्णामतिदेशः प्रसाध्यः । सर्वथा नाद्यस्यैव चतुर्ष्वतिदेशः । एवं चाग्निष्टोममुखानीत्यनुवादोपपत्तिः । इतरेषां चयाणामन्यसंस्थाकत्वात् । इतरथाऽग्निष्टोमानीत्येवावक्ष्यत् । सर्वेष्वग्निष्टोमसंस्थाकत्वस्यैवातिदेशेन प्राप्तेः ॥ ८ ॥ ३ ॥ ९ ॥

कालाभ्यासे ॥ षट्त्रिंशद्राचे चत्वारो भवन्ति चत्वारो भवन्तीति श्रुतम् । द्वादशाहान्तर्गतदशाहे चाद्य एकः षडहः सधर्मकः श्रुतः । तदिह तस्यैव वारचतुष्टयमच प्रवृत्तिरुत दशाहस्यावृत्त्येति चिन्तायाम् । न तावदच षडहशब्दो नामातिदेशकः । तस्य संख्याविशिष्टाहर्वाचकस्य गुणविशिष्टकर्मविधायित्वेन नामत्वाभावात् । सत्त्वेऽपि वा यौगिकत्वेनोक्तविधायित्वाच्चतेर्नामातिदेशकत्वायोगाच्च । नापि

प्राकृतषड्हानुवादेन संख्याविधिः। द्वादशाहत्वानुपपत्त्या तच्चा-
निवेशात्। अतः कर्मान्तराण्येव संख्यया चतुर्विंशतिर्विधीयन्ते।
न तु षड्हस्य चतुरावृत्तिः। तथात्वे चतुः षड्होभवतीति क्रिया-
भ्यावृत्तिविहितसुच्प्रत्ययापत्तेः। चत्वारो भवन्तीति श्रवणात्तु पृथक्-
त्वनिवेशिन्या संख्यया भेद एव। अतस्तु गणत्वसामान्याद्द्वादशाहं
द्विरभ्यस्यावशिष्टेषु चतुर्षु दशाहाद्यानां चतुर्णां प्रवृत्तिरिति प्राप्ते।

यद्यपि तन्त्ररत्नरीत्या चतुर्विंशतिरेतानि कर्माणि, तथापि
षड्हशब्दवत्त्वसादृश्येन तस्यैव चतुर्वारं प्रवृत्तिः। वस्तुतस्तु नात्र तावन्ति
कर्माणि, चतुर्विंशतिसंख्याया अश्रवणात्। षट्संख्यायाः चतुःसंख्यया-
श्चैकत्र द्वयमिति न्यायेन कर्मान्वयमङ्गीकृत्य भेदाङ्गीकारे कर्मदश-
कापत्तिः। षट्संख्यायाः समासगतत्वेन तथान्वयानुपपत्तेश्च। अत
एकविशिष्टे अपरवैशिष्ट्यमिति न्यायेनैव षट्संख्याविशिष्टे चतुः-
संख्यान्वयोवाच्यः। अतश्च सत्यप्येकवाक्यत्वे प्रयाजैकादशत्वन्यायेन
निर्ज्ञातसंख्यत्वाच्चतुःसंख्या आवृत्त्यापादिकैव। वस्तुतस्तु पृथगाख्यात-
श्रवणादचापि भिन्नवाक्यत्वमेव। तेन षसामेव कर्मणां चतुर्वारमा-
वृत्तिः। सुच्प्रत्ययाभावेऽपि च प्रमाणान्तरेणावृत्तिकल्पने न
कश्चिद्दोषः। अतः सूत्रभाष्यस्वारस्येन षसामेवावृत्तेः षट्संख्यत्व-
सादृश्यादिना षड्हस्यैव वारचतुष्टयं धर्माः॥ ८॥ ३॥ २॥

संस्थागणे॥ अनारभ्य, शताग्निष्टोमं भवति शतोक्थ्यं शताति-
रात्रमिति श्रुतम्। तत्राग्निष्टोमादिशब्दानां ज्योतिष्टोम एव
प्रचुरप्रयोगात्तदनुवादेन शतसंख्याऽभ्याससापादिका विधीयते। न
ह्यग्निष्टोमादिशब्दानां संस्थाविशिष्टक्रतुसामान्यवाचित्वम्। तथात्वे

अथातोऽग्निष्टोमेनेत्यादौ प्राकरणिकोत्तरवेद्यवरोधेन वचनस्य विकृतौ निवेशापत्तेः। अतो ज्योतिष्टोमत्वाजाच द्वादशाहप्रवृत्तिः। अथवा, अग्निष्टोमादिशब्दानां नागृहीतविशेषणान्यायेन संस्थामात्रवाचित्वाज्ज्योतिष्टोमे निरूढलक्षणाऽङ्गीकारेऽपि प्रकृते तदाश्रयणे प्रमाणाभावान्नित्यकाम्यसंस्थानुवादेनैव शतावृत्तिविधिः। अस्मिन्नपि पक्षे ज्योतिष्टोमस्यैवाश्रयत्वादिना सत्त्वान्न गणातिदेशः। अस्तु चेदं कर्मान्तरम्। तथाप्यन्यपदार्थस्यैकवचनान्तत्वादेकमेव तत्। शतसंख्यायाश्च संख्यागतत्वेनाभेदकत्वात्। अतः शतसंस्थाकमभ्यस्तमेकं कर्म ज्योतिष्टोमविकार इति न गणातिदेश इति प्राप्ते।

एकप्रसरताभङ्गापत्तेर्न तावज्ज्योतिष्टोमोद्देशेन संस्थोद्देशेन वा संख्याविधिः। अतो वषट्कर्तृभक्षवदेव कर्मान्तरम्। तदपि नैकम्। तथात्वे एकस्य कर्मणोऽनेकसंस्थाकत्वस्याभ्यासमन्तरेणानुपपत्तेरश्रुतसुत्याभ्यासकल्पनापत्तेः। अतोऽग्निष्टोमोक्थ्यादिपदानां चित्रदग्निष्टुदग्निष्टोम उक्थ्योवैरूपसामेत्यादौ विकृतियज्ञसामानाधिकरण्येनापि क्वाचित्कप्रयोगेण साम्प्रतिकलक्षणया तत्तत्संस्थाकयज्ञान्तरपरत्वमङ्गीकृत्य शतसंख्याभिन्नतावद्यज्ञविधिरेवायम्। एवं चान्यपदार्थो न कर्मापि तु शतं उक्थ्यसंस्थाकायज्ञाः करणं यस्मिन्निति व्युत्पत्त्या फलमेवेति ध्येयम्। तदपि च नोद्दिश्य यज्ञविधिरेकप्रसरताभङ्गतादवस्थ्यापत्तेः। अपि तु तात्पर्यगत्या अंशत्रयविशिष्टतावद्भावनाविधिरेवेति युक्ता गणस्यैवातिदेशाद्द्वादशवारमावृत्तिः। द्विगुसमासत्वाद्वा न कश्चिद्दोषः। *[एकवचनान्तत्वानन्तत्वे उपपत्ति-

* [ ] एतच्चिह्नद्वयान्तर्गतः पाठः नास्ति सो॰ पुस्तके।

रूपः]। कर्मैकत्वेऽपि आवृत्तेरावश्यकत्वेन सुत्यागणत्वानपायाद् द्वादशाहधर्माविरोधः॥ ८॥ ३॥ ४॥

गणादुपचयः॥ शताग्निष्टोमादौ द्वादशाहगतदशरात्रप्रवृत्तिरित्युक्तम्। द्वादशाहे च प्रथमोत्तमावतिरात्रसंस्थाकौ। दशरात्रप्रथमोत्तमौ चाग्निष्टोमसंस्थाकौ। मध्यतनानि चाष्टौ उक्थ्यसंस्थाकानि। तेषाञ्चित्सप्तोक्थ्यसंस्थाकानि, एकः षोड़शी। तदिह शताग्निष्टोमे तावदतिदेशप्राप्तानामुक्थ्यादीनां बाधादग्निष्टोमसंस्थाकत्वे न कापि क्षतिः। उक्थ्यातिरात्रयोस्तु दिनेषु येषु* अतिदेशेनैवोक्थ्यस्तोत्रादि प्राप्तम्, तेष्वपि न काचिच्चिन्ता। येषु तु अग्निष्टोमसंस्थाकत्वप्राप्तिस्तेषु वचनादेवोक्थ्येषु कर्त्तव्येषु द्वादशाहिकान्येवोक्थ्यातिरात्रस्तोत्राण्युपस्थितत्वात्कर्त्तव्यानीति प्राप्ते।

न तावदतिदेशेन तेषामुपस्थितिः। प्रथमस्य प्रथममित्येवं क्रमेण प्रत्येकमेव तत्तदहःसु तत्तदह्नामतिदेशेन यान्यह्नानि उक्थ्यसंस्थाकप्राकृताहर्विकाराणि तेषु तदीयोक्थ्यप्राप्तावपि अग्निष्टोमसंस्थाकप्राकृताहर्विकारेषु तत्प्राप्तौ प्रमाणाभावात्। प्रथमोत्तमयोरेवातिरात्रसंस्थाकत्वेन तयोः क्वाप्यनतिदेशेन रात्रिपर्य्यायाणां सुतरामप्राप्तेश्च। अतः शतोक्थ्यादौ तेषु तेष्वहःसु वाचनिकानि स्तोत्राणि। न हि भिक्षुको भिक्षुकान्तरं याचते इति न्यायेन ज्योतिष्टोमस्थान्येव कार्य्याणि। अयं च नातिदेशोऽपि तु कर्म्मान्तरत्वे प्रमाणाभावाच्चोक्थ्यप्रभृतिद्विरुक्तत्यानि वचनेन विधीयन्ते। किञ्च

---

* दिनेषु येषु,—इति नास्ति सो॰ पुस्तके।

स्तोत्राणामुत्पत्तिर्ज्योतिष्टोम एव। द्वादशाहे तु अतिदेशप्राप्त-स्तोत्रानुवादेन धर्मविशेषमात्रम्। अतश्च ज्यौतिष्टोमिकानामेवोप-देशेन विधानम्। अतएव रात्रिपर्यायादीनां ज्योतिष्टोमे स्तवार्थ-संख्याकॢप्तेनेकात्तातिदेशेऽपि न काचित्क्षतिरुपदेशेनैव तद्विधानाङ्गी-कारात्॥ ८॥ २॥ ५॥

गायत्रीषु॥ बृहस्पतिसवे प्रकृतितो गायत्र्येष्टुभादिनानाछन्दःसु प्राप्तेषु छन्दोन्तरपरिसंख्यार्थं गायत्रमेतदहर्भवतीति श्रुतम्। तच्च गायत्र्यादिशब्दानां चतुर्विंशत्याद्यक्षरसंख्यामात्रवाचित्वात्तगृहीत-विशेषणान्यायेन लक्षणयापि त्र्यृचप्रयोगोपपत्तेस्तत्रापि न शक्तिः। अतश्च प्राकृतीष्वेव त्र्यृचु अधिकाक्षरलोपं कृत्वा चतुर्विंशत्यक्षराण्येव पठनीयानि। अतएव, ये हि द्वे गायत्र्यौ सैका जगतीति लिङ्ग-मपि संख्यावाचित्वपक्षे उपपद्यते न छन्दोवाचित्वपक्षे। तिस्रोऽनुष्टुभ-स्तत्स्तोगायत्र्यो भवन्तीति च। अतश्च शताग्निष्टोमे उक्थ्यादि-स्तोत्रलोपवद्विशाष्यधिकाक्षरलोपप्रसक्तौ,

न गायत्र्यादिशब्दानां संख्यामात्रवाचित्वम्। तथात्वे घटादि-संख्यायामपि प्रयोगापत्तेः। प्रयोगानुसारेणाक्षरसंख्यावाचित्वे तेनैव छन्दोविशेषस्य वाच्यतापत्तेः। इतरथा तावदक्षरे गद्येऽपि प्रयोगा-पत्तेः। अतोष्टाक्षरपादत्रयादियुक्तमन्त्रविशेष एव गायत्र्यादिपद-वाच्यः। निरुक्तलिङ्गेषु तु संख्यामात्रे लाक्षणिकः। तेन दाशत-यीभ्य एवोत्पत्तिगायत्र्य आनेया न लक्षरावलोपः। तथात्वे वाक्यार्थपरिपूर्त्यभावेनार्थप्रत्यायकत्वानुपपत्तेश्च*। पूर्वाधिकरणे

* प्रकाशकत्वानुपपत्तेश्च,—इति सो॰ पुस्तके पाठः।

अधिकागमरूप उपचयश्चिन्तितस्तत्प्रसङ्गादिहापचयश्चिन्त्यत इति नाच तथाध्यायसंगतौ यतितव्यम् ॥ ८ ॥ ३ ॥ ६ ॥

इति श्रीखण्डदेवकृतौ भाट्टदीपिकाया-
मष्टमाध्यायस्य तृतीयः पादः ॥

---

## अथाष्टमाध्यायस्य चतुर्थः पादः ।

दर्विहोमे ॥ तदेवं सिद्धेऽतिदेशे दर्विहोमेषु तदपवादं वक्तुं दर्विहोमशब्दार्थो निरूप्यते । तत्र न तावदयं दर्व्याख्यस्य गुणस्य विधिरिति शङ्कितुं शक्यम् । सोमादिवद्विधिवाक्ये श्रवणाभावेन विधायकत्वशङ्कानुपपत्तेः । न च वास्तुहोमीयगुणविध्यर्थवादे, यदेकया जुह्वा दर्विहोमं कुर्यादित्यत्र श्रुतस्य दर्विहोमपदस्य घृतादिपदवत्पदान्तरकल्पनया विधायकत्वसम्भवः । पुरोऽनुवाक्यामनूच्य याज्यया यजतीति ऋग्द्वयरूपगुणविधेर्दर्व्यपेक्षाभावात् ।

न च सिद्धवन्निर्देशान्यथानुपपत्त्योपरि हि देवेभ्यो धारयतीतिवद्वाक्यान्तरकल्पनया होमोद्देशेनैव दर्विविधायकत्वम् । वास्तुहोमे तावत्स्रुचः प्रत्यक्षशिष्टत्वेन विधातुमशक्यत्वात् । होमान्तरेष्वपि स्मार्त्तेषु न्यञ्चितया मूलदण्डया दर्व्या जुहोतीति स्मार्त्तवचनेनैव तत्प्राप्तेः । श्रौतेष्वपि स्रुवेण जुहोति जुह्वा जुहोतीत्यादिना तत्र तत्र पात्रान्तरसद्भावाच्च । अतश्च तत्प्रख्यन्यायेन गुणविधित्वानुपपत्तेर्दर्विशब्दं पात्रान्तरस्योपलक्षणमङ्गीकृत्यैकदेशप्रवृत्तिनिमित्तेन वा तत्साध्यहोममात्रस्येदं नामधेयम् ।

तथापि यथैव स्मार्त्तानां पार्वणस्थालीपाकादीनां कर्त्तरि दर्विहोमिक इति प्रयोगदर्शनात् प्रवृत्तिनिमित्तसद्भावाच्च तेषां नामधेयं, तथैव वास्तुहोमेऽपि प्रयोगात् श्रौतानामपि । न च वास्तु-

होमस्यैकया स्रुचा करणे दर्विहोमत्वप्रयत्नाभिधानादस्तुतो दर्वि-होमत्वाभावप्रतीतेरस्य प्रयोगस्य विरुद्धत्वमिति वाच्यम्। दर्वि-होमपदस्य स्मार्त्तमात्रनामत्वे वास्तुहोमे एकया स्रुचा क्रियमाणेऽपि दर्विहोमत्वानापत्तेरस्यार्थवादस्य ज्ञापकविधया श्रौतेष्वपि होमेषु दर्विहोमपदप्रवृत्तिसाधकत्वात्। अतः सर्वनामधेयम्। तत्रापि होमपदश्रवणाद्धोमानामेव न तु यागानाम्। न च यागत्वेऽपि चतुरवत्तं जुहोतीत्यनेन होमविधानात्तन्नामत्वोपपत्तिः। तत्रत्य-जुहोतिना प्रक्षेपमात्रस्यैव प्रतिपत्तिरूपस्य लक्षणया विधेयत्वेन तस्य मुख्यहोमत्वाभावात्। अतो होमनामधेयमेवेदम्। इदं च सिद्धमेव उत्तरविवक्षार्थं प्राप्यते॥ ८॥ ४॥ १॥

तस्मिन्॥ तेषु अव्यक्तत्वसामान्येन सोमयागविकारत्वम्। अव्यक्तत्वं चोत्पत्तिवाक्ये देवताऽभावरूपम्। न तु स्वाङ्गतया देवताशून्यत्वम्। तथात्वे सिद्धान्ते दर्विहोमेषु देवताऽभावप्रसङ्गात्। अतएवोपांशु-याजविकारत्वमपि प्रयुक्तम्। अथवा होमत्वसामान्याधिक्यादरिष्ट-होमविकारत्वम्। अतएवाग्निहोत्रे यदि कीटोवपद्येतान्तःपरिधि निनयेदिति परिधिदर्शनम्। परिधेर्हि अङ्गप्रधानार्थत्वादरिष्ट-होमाङ्गत्वमपि सुलभमेव। तथा, अग्नौ अन्तर्वेदि तिष्ठन् सावित्राणि जुहोतीति वेदिदर्शनं नारिष्टहोमविकारत्वसाधकम्। यत्तु मूले पत्नीसंयाजविकारत्वं शङ्कितं, तत्तेषां यागत्वादुपेक्षितम्। यदि परमुपांशुयाजसाधारण्येन, तदाऽस्तु पिष्टलेपफलीकरणहोमयोर्वा विकारः। सर्वथा नापूर्वा दर्विहोमा इति प्राप्ते।

द्रव्यदेवतादिसन्निपत्योपकारकाङ्गसामग्रीसाकल्यरूपकृत्स्नविधा-

नवत्वेन यावदुक्तेतिकर्त्तव्यतयैव निराकाङ्क्षत्वात्प्राकृतस्य च विधि-गमनाविरहेणानियामकत्वादपूर्वाः एव दर्विहोमा न प्रकृतिपूर्व्वाः। यत्तु परिधिवेदिदर्शनं, तद्दोषोपलक्षणतयाप्युपपन्नम्। एवं च त्र्यम्बकहोमेषु औपित्येन नावेक्षावर्हिः संनह्यते न प्रयाजानूयाजा-इज्यंते न सामिधेनीरन्वाहेति स्तुतिरप्युपपद्यते। अतिदेशपक्षे स्वत-न्त्रपर्युदासकल्पने विध्यन्तरैकवाक्यताभङ्गापत्तेः।

सोमयागाद्यविकारत्वे इदमपरं लिङ्गम्। औदुम्बरीहोमे घृतेन द्यावापृथिवी आपृणेति अन्तरा कर्णौ जुहोति भूमिगते चाज्ये स्वाहाकार इति। सोमयागादिविकारत्वे हि अतिदेशेन वषट्कारः प्राप्येत। तत्र स्वाहाकारस्यापि विधिरपूर्वविधिः स्यात्। अस्मन्मते तु स्वाहाकारेण वा देवेभ्यो हविः प्रदीयते वषट्कारेण वेति अनारभ्याधीतवाक्येन विहितयोः स्वाहाकारवषट्कारयोर्विकल्पेन प्रदानमात्रे प्राप्तौ याज्याया अधि वषट्करोतीति वचनेन याज्याव-त्कर्मणि वषट्कारनियमात्तद्रहिते परिशेषादेव स्वाहाकारप्राप्ते-स्तदनुवादेन भूमिगमनोपलक्षितकालमात्रविधानाल्लाघवम्। न चैवं परिशेषादेव सर्वत्र स्वाहाकारप्राप्तौ अग्निर्ज्योतिरित्यादौ क्वचित्पुनः स्वाहाकारपाठवैयर्थ्यम्। तस्य मन्त्रत्वसिद्ध्यर्थत्वेन सार्थक्यात्। यदि त्वतिदेशपक्षेऽपि औपदेशिकमन्त्राम्नानादेव याज्यारहित्याद्वषट्कार-प्राप्त्यभावेन परिशेषसिद्धेः स्वाहाकारप्राप्तिरुन्नाय्येत, ततो नेदं लिङ्गं इति ध्येयम्। अतः सिद्धं दर्विहोमा अपूर्वा इति॥ ८॥ ४॥ २॥

इति श्रीखण्डदेवकृतौ भाट्टदीपिकायां अष्टमस्य
चतुर्थः पादोऽध्यायश्च समाप्तः॥

# अथ नवमाध्यायस्य प्रथमः पादः ।



यज्ञकर्म ॥ तदेवं चिन्तेऽतिदेशे तत्प्रापितपदार्थविषय ऊहश्चिन्त्यते । त्रिविधश्चोहो निरूप्यते । मन्त्रोहः, सामोहः, संस्कारोहश्च । तत्रोहोनाम प्रकृतावन्यथा दृष्टस्य विकृतावन्यथा भावः । तत्त्वं च, येन सम्बन्धेन यद्धर्मावच्छिन्नवृत्तित्वं यस्य प्रकृतौ श्रुतं, तस्य तेन सम्बन्धेन विकृतौ तद्धर्मावच्छिन्नभिन्नवृत्तित्वम् ।

अस्ति चेदं देवस्य त्वादिमन्त्रेषु प्रोक्षणादिसंस्कारेषु च । मन्त्राणां हि स्मारकत्वसम्बन्धेनाग्नित्वाद्यवच्छिन्नवृत्तित्वं श्रुतं प्रकृतौ, विकृतौ च तेनैव सम्बन्धेन तद्धर्मावच्छिन्नभिन्नसूर्यादिवृत्तित्वात् । एवं प्रोक्षणावघातादीनामपि संस्कार्यतासम्बन्धेन व्रीहित्वावच्छिन्नवृत्तित्वं प्रकृतौ श्रुतं, विकृतौ च तेनैव सम्बन्धेन तद्धर्मावच्छिन्नभिन्नश्यामाकादिवृत्तित्वात् । एवं साम्नामपि, आई-भावादिरूपाणां येन सम्बन्धेन यत् स्थानगतैकारवृत्तित्वं प्रकृतौ श्रुतं, विकृतौ तेषां तेनैव सम्बन्धेन तत्स्थानभिन्नस्थानगतैकारवृत्तित्वादूहः ।

अत्र श्रुतत्वं तात्पर्यमनपेक्ष्य प्रतीयमानत्वम् । तेनोक्तैकारवृत्तित्वादेः शब्दादप्रतीतावपि न क्षतिः । अत्र च सम्बन्धैक्याविवक्षायां पशुपुरोडाशयागीयोद्देश्यांशस्य प्रकृतौ स्मारकत्वसम्बन्धेनाग्नीषोमदेवतावृत्तेर्विकृतावनुपयुक्तान्यदेवताविधानेनारादुपकारकस्य सम्बन्धान्तरेण क्रतूपकारवृत्तित्वादतिप्रसङ्गवारणाय सम्बन्धै-

क्यविवक्षणम्। प्रकृतावेव व्रीहित्वाद्यवच्छिन्नवृत्तित्वेन श्रुतानामवघातादीनां तद्भिन्नयवादिवृत्तित्वात्तद्वारणाय प्रकृतिविकृतिपदोपादानम्। प्रकृतिस्थव्रीहिव्यक्त्यपेक्षया सौर्यादिविकृतिस्थव्रीहिव्यक्तीनां भेदादातिदेशिकव्रीहिमत्सौर्यादावेवावघातादीनामुक्तवारणार्थं यद्धर्मावच्छिन्नेति विशेषणम्। सौर्यस्थव्रीहिषु तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकव्रीहिभेदसत्त्वेऽपि व्रीहित्वावच्छिन्नप्रतियोगिताकतद्भेदाभावात्। यवसाध्यविकृतौ तूहाङ्गीकारेऽप्यदोषः। प्रकृतौ प्रोक्षणादीनां तात्पर्यगत्या अपूर्वसाधनत्वावच्छिन्नवृत्तित्वस्यैव विवक्षितत्वेन विकृतावपि तेनैव रूपेण श्यामाकवृत्तित्वात्सम्भवमपूर्वयोर्दर्शपूर्णमासीयत्वादिना भेदविवक्षायां सौर्यस्थव्रीहिष्वतिव्याप्तिमाशङ्क्य श्रुतपदं निरूढप्रतीयमानत्वार्थकम्। अपूर्वसाधनत्वस्य तात्पर्यज्ञानाधीनत्वेन निरूढश्रुतत्वाभावात्। अत्र चाग्निपदस्थाने सूर्यादिपदप्रक्षेपेऽपि अवशिष्टमन्त्रस्य प्राकृतत्वानपायाच्च लक्षणे तस्येति शब्दानुपपत्तिः। एवं च यत्र प्राकृतर्क्स्थाने ऋगन्तरस्योहस्तत्रोहशब्दो भाक्त इति ध्येयम्। अथवाऽस्तु तदनुरोधेन तस्येति पदं प्राकृततत्कार्यापन्नान्यतरपरमिति संक्षेपः।

स चोहः प्राकृतपदार्थानां प्रकृतौ यद्रूपावच्छिन्नोद्देश्यसम्बन्धित्वेन विधानं, तद्रूपावच्छिन्नसम्बन्धित्वेनैवातिदेशे सिद्ध्येत्। न तु स्वरूपेणैवातिदेशे। तथात्वेऽग्निपदस्यैवातिदेशेन सौर्ये तस्यैवादृष्टादिप्रयोजनान्तरकल्पनया प्रयोगोपपत्तावूहानापत्तेः। अतएवोपकारपृष्ठभावेन पदार्थानां विकृतावतिदेशः। प्रकृतौ निरूपितरूपाणामेव वा विकृतावतिदेश इति दशमे वक्ष्यते।

तद्विचारोपोद्घाततया किं प्रोक्षणावघातादीनामग्नये जुष्टं निर्वपामीत्यादावग्न्यादिपदानां च प्रकृतौ व्रीहित्वाग्नित्वाद्यवच्छिन्नोद्देशेन विधानं, ततश्च व्रीह्यग्न्यादिप्रयुक्तास्तेऽथवाऽपूर्वसाधनत्वावच्छिन्नोद्देशेन, ततश्चापूर्वप्रयुक्ता इति चिन्त्यते। व्रीह्यादिप्रयुक्तत्वे श्यामाकचरौ सौर्यं वा व्रीह्यादीनामभावात्प्रोक्षणादीनां लोप एव न तूहः। अपूर्वप्रयुक्तत्वे तु श्यामाकादीनामपि तद्रूपावच्छिन्नत्वात्सिध्यत्यूहः। तत्र यद्यपि आरादुपकारकस्थले न श्रुतमुद्देश्यतावच्छेदकम्, तथापि करणानुग्राहकाकाङ्क्षारूपेतिकर्त्तव्यताकाङ्क्षात्मकप्रकरणेन यागाङ्गतयैव प्रयाजादिविधानाद्यागत्वमेवोद्देश्यतावच्छेदकम्। न त्वपूर्वं, समप्राधान्यापत्तेः। न चैतावता पारिप्लवत्वापत्तिः। अनुवादस्य सति सम्भवे सन्निहितगामित्वेनाग्नेयादित्वस्यैवोद्देश्यतावच्छेदकत्वात्। न वा अतिदेशोच्छेदः। अपूर्वविशेषार्थत्व इव आग्नेयाद्यर्थत्वेऽपि तद्वत् कुर्यादित्यतिदेशेनाग्नेयस्थानापन्ने सौर्ये धर्मातिदेशोपपत्तेः। अतस्ते यागप्रयुक्ता एव। तदा किमु वक्तव्यं यद्व्रीह्यादिसंयोगेनैव प्रोक्षणादिश्रवणाद्व्रीहित्वादिकमेवोद्देश्यतावच्छेदकमिति।

न च व्रीहियागादिस्वरूपार्थत्वे धर्माणां आनर्थक्यम्। तेषामपि अग्निवत्फलवत्त्वेन तदभावात्। न चाग्नीनामाधानव्यतिरेकेणोत्पत्तौ प्रमाणाभावेन तदभावेऽपि व्रीह्यादीनां प्रोक्षणादिव्यतिरेकेणापि जायमानतयाऽऽनर्थक्यापत्तिस्तदवस्थैवेति वाच्यम्। एतादृशानर्थक्यपरिहारार्थं प्रोक्षणविशिष्टव्रीहिणामेव कल्पितवाक्यान्तरेण यागार्थत्वस्यापूर्वार्थत्वस्य वा बोधोपपत्तौ निषादस्थपत्यधिकरणन्यायेन व्रीहिपदे यवादिसाधारणेनापूर्वसाधनत्वलक्षणायां प्रमाणाभावात्।

अस्तु वा व्रीहिपदे लक्षणा, तथापि लाघवादुपस्थितत्वाच्च विजातीययागसाधनव्रीहित्वादिकमेव लक्ष्यतां, न त्वपूर्वसाधनत्वम्। न च यागस्यापि विजातीयत्वेन प्रोक्षणादिव्यतिरेकेणापि जायमानत्वादानर्थक्यापत्तिः। यागत्वावच्छिन्नस्यापूर्वत्वावच्छिन्नस्येव जायमानत्वेऽपि विजातीययागत्वावच्छिन्नस्य प्रोक्षणादिव्यतिरेकेण जायमानत्वे प्रमाणाभावात्। न हि आग्नेयत्वावच्छिन्नं प्रति काचित्सामग्री क्लृप्ताऽस्ति, येन तच्चान्यव्यक्तौ आग्नेयत्वाभिव्यक्तिर्भवेत्। प्रोक्षणादेरेव तु विधानबलेन तत्सामग्रीत्वात्, तद्व्यतिरेकेण तदुत्पत्तौ प्रमाणाभावेन न यागस्वरूपार्थत्वे आनर्थक्यं प्रोक्षणादीनाम्। अतएवारादुपकारकाणामपि यागस्वरूपार्थत्वे नानर्थक्यमितिप्राप्ते।

यद्यपि तावद्विजातीययागसाधनत्वमेव प्रोक्षणादीनामुद्देश्यतावच्छेदकं, तथापि अपूर्वसाधनत्व इव वक्ष्यमाणरीत्या न तत्र व्रीहित्वादिकं प्रविष्टमितिशास्त्राभावेऽप्यपि तत्सत्त्वादूहसिद्धिरनिवार्यैव।

वस्तुतस्तु न विजातीययागसाधनत्वं तथा। विजातीययागव्यक्तीनामपि व्यापकीभूतयागत्वावच्छिन्नव्यक्त्यन्तर्गतत्वात्तदवच्छिन्नं प्रति द्रव्यत्वावच्छिन्नस्य लोकत एव कारणत्वावगतेः। सामग्रीवशेन व्रीह्यादिद्रव्यं विनापि द्रव्यान्तरेण कदाचिद्विजातीययागव्यक्तीनामुत्पत्तौ बाधकाभावेनानर्थक्यस्य तदवस्थत्वात्। न च सामान्यसामग्र्या विशेषसामग्रीसहिताया एव कार्यजनकत्वनियमः। अन्यच्च तथात्वेऽपि प्रकृते तथा कल्पनायां प्रमाणाभावात्। तदेव यादृक् तादृक् होतव्यमिति लिङ्गानुपपत्तेश्च। अतएवानयैव रीत्या पक्षप्राप्तिमुपपाद्य फलतो नियमविधित्वं व्रीह्यादिविधीनामुपपाद्यते

प्रतिनिधिस्य*। अतो द्रव्यतत्संस्कारविषयः सर्वे अपूर्वसाधनीभूत-विषया एव। व्यापकीभूतापूर्वत्वावच्छिन्नं प्रति द्रव्यत्वादिना कारणत्वस्य लोकतोऽक्लृप्तत्वेन निरूक्तप्रतिबन्धानापत्तेः। आरादुप-कारकाणामप्यनयैव दिशा अपूर्वजननानुकूलयोग्यतासंपादकत्वं न तु यागार्थत्वम्। आनर्थक्यापत्तेः। यागनिष्ठयोग्यतासंपादकत्वाच्च न प्राधान्यापत्तिरङ्गत्वविघातो वेत्यादि स्पष्टं कौस्तुभे।

यत्तु व्रीहित्वाद्यवच्छिन्नोद्देशेनैव प्रोक्षणादिविधिः। शाब्दबोधे लक्षणाया अनङ्गीकरणात्। पश्चात्तु निषादस्थपतिन्यायेन प्रोक्ष-णादिविधिविशिष्टव्रीहीणां वाक्यान्तरकल्पनया अपूर्वार्थत्वकल्पनमित्यु-क्तम्। तत्प्रोक्षणादेस्तज्जन्यादृष्टस्य वा व्रीहित्वावच्छिन्नभाव्यकत्वे अयोग्यतानिश्चयस्य प्रतिबन्धकत्वाच्छाब्दबोधस्यैवानुपपत्तेर्लक्षणाङ्गी-करणात् प्रत्युक्तम्। अतो व्रीह्यादिपदेनापूर्वसाधनत्वावच्छिन्न-लक्षणात्तदुद्देशेनैव प्रोक्षणादिविधिरिति ते अपूर्वयुक्ता एवेति सिद्धः स्वामाकादायूहः। न चैवमपि धर्मानुष्ठाने व्रीहित्वादीना-मपि अनुष्ठापकतया निमित्तत्वादिष्टतौ तदभावे भेदनाभाव इव धर्मस्योपापत्तिः। यच्छब्दाद्यभावेन व्रीहित्वादीनां निमित्तत्वे प्रमाणाभावात्। वक्ष्यमाणरीत्या उद्देश्यतावच्छेदककोटावप्रवेशेना-नुष्ठापकत्वस्याप्यभावाच्च। अतएवापूर्वस्यैव तत्रानिमित्तत्वम्।

वस्तुतस्तु फलेच्छाया अनुष्ठापकत्वेऽपि फलस्यासिद्धस्यानुष्ठा-पकत्वे प्रमाणाभावात् फलीभूतापूर्वमपि न निमित्तम्। अनयैव च

---

* प्रतिनिधिस्य,—इत नास्ति स्या० पुस्तके।

द्दिशा यागलक्षणाधारादुपकारकत्वस्य निमित्तत्वं प्रत्युक्तम् । अतो-बाधकाभावात् विध्यत्वेवोक्तः । यानि चात्र मूले वर्णकान्यनेकानि कृतानि, तानि पुनरुक्तत्वादनुपयुक्तत्वाच्चोपेक्षितानि । मूलकारैस्तु ग्रन्थव्याख्यानरसिकतया कृतानीति ध्येयम् ॥ ९ ॥ १ ॥ १ ॥

संस्कारे ॥ अत्र मूले सन्निपत्योपकारकेषु पूर्वमुक्तमप्यपूर्वार्थत्वं त्रिभिरेभिरधिकरणैराक्षिप्य समाधीयते। तत्रेह वाक्यसंयुक्ते अग्रि-माधिकरणद्वये च लिङ्गश्रुतिसंयुक्तयोरिति विवेकः । तदिह दर्श-पूर्णमासप्रकरणे श्रुते प्रोक्षिताभ्यामुलूखलमुसलाभ्यामवहन्तीत्यादौ प्रोक्षणं नापूर्वार्थम् । वाक्येन तस्यावघातार्थत्वावगमनेन प्रकरण-मात्रादपूर्वार्थत्वकल्पनानुपपत्तेः । न च निष्ठाप्रत्ययोक्तोलूखलमुसलो-द्देशेनैव प्रोक्षणस्य व्रीहीन् प्रोक्षतीतिवत् विधानात्कथं वाक्येनापि तस्यावघातार्थत्वम् । द्वितीयावच्छिष्टया कर्मत्वस्य विशेष्यतयाऽनुक्तेः कर्मत्वस्य द्रव्योपसर्जनत्वप्रतीत्या तयोरुद्देश्यत्वानुपपत्तेः । अतश्च प्रोक्षणस्यानर्थक्यतदङ्गन्यायेनोलूखलमुसलयोरवतारेऽपि वाक्यादव-घातोद्देशेनैव विधानम् । अस्तु वा उलूखलादावेवावतारे प्रमाणा-भावात् प्रोक्षणस्य पदश्रुत्या तदन्वयेऽपि तृतीयया अन्यसाधनीभूत-योरेव तयोः प्रतीतेः प्रोक्षणस्यापि यदुलूखलमुसलयोः कार्यं तदर्थत्वावगतेरवघातार्थत्वसिद्धिः । सर्वथा नापूर्वार्थत्वम् । एवं च नैवारश्चरुर्भवावपूतानामित्यादाववघातस्योलूखलमुसलयोर्वाऽभावाच्च-रुषु न प्रोक्षणमितिप्राप्ते ।

पूर्वाधिकरणोक्तरीत्यैवावघातस्वरूपे उलूखलमुसलस्वरूपे वाऽऽन-र्थक्यापत्तेरपूर्वसाधनत्वलक्षणया अपूर्वार्थत्वावसायाद्ब्रोपपत्तिरित्यु-

क्तम्। तदनुपपन्नम्। आक्षेपप्रकारस्याधिकस्याभावेन पौनरुक्त्यापत्तेः। किञ्च प्रोक्षणं न तावदवघातोद्देशेन विधीयते। उलूखलमुसल-विशेषणत्वेनैव प्रतीतेः। न ह्यस्य प्रधानक्रियान्वयो व्युत्पन्नोऽपि तु निष्ठाचिह्नक्रियान्वय एव। नाप्यवघातसाधनीभूतोलूखलमुसलो-द्देशेन, विशिष्टोद्देशापत्तेः। उलूखलमुसलयोर्विशिष्टयोः गुरुत्वयोर्वा उद्देश्यत्वे एकप्रसरताभङ्गापत्तेश्च। अतो नैवं पूर्वः पक्षः सम्भवी।

अपि तु विध्यन्तरप्राप्तावघातानुवादेनार्थात् सम्भवत्प्राप्तिकयो-रपि उलूखलमुसलयोः पूर्वप्रवृत्त्यङ्गीकारेण प्रोक्षणविशिष्टयोर्विधा-वार्थिकेन विशेषणविधिनोलूखलमुसलोद्देशेन प्रोक्षणविधिर्वाच्यः। ततश्चोलूखलमुसलत्वेनोद्देश्यताऽपूर्वसाधनत्वेन वेति विचारः कार्यः। सोऽपि च तदा भवेद्यदि सकलपौरडाशिकपात्रसाधारणेन प्रोक्षण-विधिर्न स्यात्। न त्वेतदस्ति। उत्तानानि पात्राणि प्रोक्षतीति विध्यन्तरेण तस्य प्राप्तत्वात्। न हि मीमांसकमते पौरोडाशिक-पात्रप्रोक्षणाभावः। मन्त्राभावस्यैव परं तृतीये साधनात्। अतः प्रकारान्तरेण प्राप्तस्यार्थस्यायमनुवादः। अभ्युदयशिरस्कतयोलूख-लमुसलविधानार्थः। समासोपात्तत्वाच नानेकविधेयता दोषाय।

अतएवं विचारोवाच्यः। पात्रप्रोक्षणविधिनैवोलूखलमुसलयोरपि प्रोक्षणम्। तत्तु पूर्वाधिकरणन्यायेनैवोलूखलमुसलनिष्ठापूर्वसाध-नत्वप्रयुक्तम्। तयोश्च तत्साधनता न साक्षादपि तु यागपुरोडाश-व्रीहितदवघातद्वारिकैव प्रयोजकत्वापरपर्याया। तत्र चातिप्रसङ्ग-परिहारार्थं साधनतावच्छेदकस्य यागत्वपुरोडाशत्वव्रीहित्वावघा-तत्वादेरपि विवक्षेत तत्तद्व्यापारकसाधनतामात्रस्यैवेति चिन्तायाम्।

व्यापारवद्विनिगमनाविरहेण साधनत्वावच्छेदकस्यापि विवक्षा। इतरथा यवादावतिप्रसङ्गापत्तेः। अथवा साधनताया अवच्छेदकं विना निरूपयितुमशक्यत्वादेव विवक्षितं तत्। न तु व्यापारः। तं विनापि साधनतायाः सत्त्वेन निरूपयितुं शक्यत्वात्। अतश्च नखेषु अवघातत्वाद्यभावान्न प्रोक्षणम्। एवं च यद्यपि श्रुतस्योलूखलत्वादेरपूर्वसाधनत्वलक्षणौपयिकत्वोपक्षीणत्वात् अविवक्षा स्यात्, तथाप्यान्तरालिकानां साधनतावच्छेदकानां यागत्वप्रभृतीनां विवक्षा दुर्निवारैवेतिप्राप्ते।

अपूर्वनिष्ठकार्यतानिरूपितकारणतादिलक्षणायामतिप्रसङ्गपरिहारार्थं मध्यवर्त्तितया झटित्युपस्थितव्यापारस्यैव व्यापारत्वे विवक्षा न तु साधनतावच्छेदकस्य, तस्य कारणतायाः पश्चादुपस्थितेः। अतएव यत्र मध्ये यागादौ न व्यापारस्तत्र कारणताया एव प्रकृत्याक्षिकया विवक्षणम्। न तु तदवच्छेदकस्य गौरवात्। उपपादितञ्चैतत् कौस्तुभे तेषामर्थाधिकरणे विस्तरेण। अतोऽवघातत्वादेरविवक्षितत्वान्नखेषु प्रोक्षणसिद्धिरिति।

एवं वा। एवं तावदुद्देश्यस्वरूपे आनर्थक्यप्रसक्तौ अपूर्वसाधनत्वलक्षणेत्युक्तम्। तत्र किं प्रधानजन्यापूर्वमेव लक्ष्यते उताङ्गजन्यमपीति चिन्तायां, यत्र तावदवघातपेषणादौ* न व्रीह्यादिजन्यं मध्येऽपूर्वान्तरं, तत्र प्रधानजन्योत्पत्त्यपूर्वसाधनत्वलक्षणा अविवादैव। यत्र त्वदृष्टार्थसन्निपत्योपकारिषु प्रोक्षणदीक्षणीयादिषु स्वजन्या-

---

* प्रोक्षणादौ,—इति सो० पुस्तके पाठः।

दृष्टमस्ति, तथापि तदङ्गानामुत्पवनादीनां, यावत्या वाचा कामयीत तावत्या दीक्षणीयायामनुब्रूयादित्यादीनां च स्वराणां, दर्शपूर्णमास-ज्योतिष्टोमाद्युत्पत्त्यपूर्वसाधनत्वलक्षणया तदर्थत्वमेव। न तु प्रोक्षण-दीक्षणीयादिजन्योत्पत्त्यपूर्वार्थत्वम्। तस्मिन्नपि फलवत्त्वाभावेनान-र्थक्यादितिप्राप्ते।

साक्षात्फलवत्त्वाभावेऽपि परम्परयाऽग्निवत्फलवत्त्वोपपत्तेरङ्गा-पूर्वाणामप्यनिर्ज्ञातोपायत्वेन स्वाङ्गाभावे निष्पत्तौ प्रमाणाभावा-दङ्गापूर्वस्वरूपेऽप्यानर्थक्याभावेन तत्साधनत्वलक्षणायामपि बाधका-भावात्। प्रधानापूर्वार्थत्ववादिनापि चाङ्गापूर्वाणामतिप्रसङ्गपरि-हारार्थं द्वारत्वस्यावश्यकत्वेन तदर्थतयैवोपपत्तौ प्रधानापूर्वपर्यन्तग-मने प्रमाणाभावाल्लक्षितलक्षणाप्रसङ्गाच्च झटित्युपस्थितदीक्षणीया-द्यपूर्वसाधनत्वमेव दीक्षणीयादिपदैर्लक्ष्यत इति ते धर्मास्तत्प्र-युक्ता एव।

अतएवाराादुपकारकाङ्गानामपि अभिक्रमणयूपादीनां प्रयाज-दैवादिजन्यापूर्वार्थत्वमेव न तु दर्शज्योतिष्टोमाद्यपूर्वार्थत्वम्। अव्य-हितापूर्वेऽप्यानर्थक्याभावात्। प्रयोजनं, ज्योतिष्टोमविकारानङ्गभूत-पशुषु मेध्यादिद्रव्यकेषूपाकरणादीनामूहाभावादकरणं पूर्वपक्षे, ज्योतिष्टोमापूर्वस्यानापत्यापूर्वाभावेन प्राकृतकार्याभावात्। सिद्धान्ते तूह इति द्रष्टव्यम्। एवं दैक्षधर्मानतिदेशोऽपि पूर्वपक्षप्रयोजन-मनुसन्धेयम्।

यत्तु भाष्यकारेणाश्वमेधे चेधातव्या दीक्षणीया भवतीति वच-नेन दीक्षणीयाकार्ये यजमानसंस्कारे विहितायां चेधातव्यायां पूर्व-

पक्षे दीक्षणीयाधर्मप्राप्तिः, सिद्धान्ते तु प्रसिद्धचैधातव्याधर्मा एवेति प्रयोजनमुक्तम् । तन्न, पूर्वपक्षवत्सिद्धान्तेऽपि स्थानापत्तौ बाधकाभावात् । यदि तु स्थानापत्त्यतिदेशापेक्षया चिविधातिदेशस्यापि बलवत्त्वस्याष्टमे साधितत्वान्नामातिदेशेन प्रसिद्धचैधातव्याधर्मा एवेत्याशङ्क्येत, ततस्तत्पूर्वपक्षेऽपि तुल्यम् ।

वस्तुतस्तु नेयं चैधातव्या प्रसिद्धचैधातव्यातः कर्मान्तरम् । सत्यप्यनुपादेययोगे आख्यातसामानाधिकरण्याभावात् । अतः प्रसिद्धायाः सधर्मकायाएव चैधातव्यायाः यजमानसंस्कारार्थत्वेन विधानाद्धर्माकाङ्क्षाविरहेण न स्थानापत्त्यतिदेशप्रसक्तिः ॥ ८ ॥ १ ॥ २ ॥

फलदेवतयोश्च ॥ पूर्वोक्ताया अपूर्वसम्बन्धित्वेनोद्देश्यतायाः क्वचित् आक्षिप्य समाधानार्थमिदमधिकरणम् । दर्शपूर्णमासयोरगन्म सुवः सुवरगन्मेति स्वर्गप्रतिपादको मन्त्रोऽग्नेरहमुज्जितिमनूज्जेषमित्यादिश्चाग्न्यादिप्रकाशको मन्त्रः श्रुतः । तयोश्च स्वर्गत्वाग्नित्वादिनैव स्वर्गाग्न्योर्लिङ्गक्लृप्तश्रुतावुद्देश्यता । उपस्थितत्वात् । न तु अपूर्वसम्बन्धित्वेन । मुख्य एवार्थे विनियोगस्यौत्सर्गिकतया साधितत्वेन तेन रूपेण स्वर्गादिपरैरनभिधानञ्च । न च स्वर्गादिस्वरूपे आनर्थक्यं, साध्यात्फलरूपस्य तस्याभिज्ञातोपायत्वाविशेषेण* तदर्थत्वे वैयर्थ्याभावात् । मन्त्रजन्यप्रकाशनव्यतिरेकेणेतराङ्गयुक्तप्रधानमात्रादेवोत्पत्तिसिद्धेरानर्थक्यमपूर्वेऽपि तुल्यम् । प्रयोगविधिना सर्वाङ्गसाहित्यावगतेर्मन्त्रजन्यप्रकाशनव्यतिरेकेणापूर्वानुत्पत्तिरिति तु स्वर्गेऽपि तुल्यम् । एवं

---

* तस्य निर्ज्ञातोपायत्वाविशेषेण,-इति आ० पुस्तके पाठः ।

देवतायामपि मन्त्रार्थवादेतिहासादिप्रमाणत्वस्याप्यपूर्वं तज्जनितदेवता-
प्रसादादेव फलोत्पत्त्यवगतेः प्रसादस्य च मन्त्रजन्यप्रकाशनव्यति-
रेकेणोत्पत्तौ प्रमाणाभावात्तदर्थत्वम्। अतएव लिङ्गकल्प्यविनि-
योगविधौ उपस्थितत्वात्प्रसादाश्रयीभूताग्नेरेव तत्त्वेनोद्देश्यता न
त्वपूर्वीयदेवतात्वेनेति न सौर्यादौ ब्रह्मवर्चससूर्यादिपदोह-
इति प्राप्ते।

न तावत्सर्वेषामेवावघातादीनामपूर्वार्थत्वमपहाय स्वर्गार्थत्वं शङ्कितुं शक्यं, व्रीह्यादिपदेन प्रत्यासन्नतया तेषामर्थाधिकरण-न्यायेनाग्नेयाद्युत्पत्त्यपूर्वसाधनत्वस्यैव लक्षणात्। एवमपूर्वाङ्गीकारेण देवताप्रसादार्थत्वमवघातादीनां निराकर्त्तव्यम्। देवताप्रसादस्या-पूर्वजन्यत्वेनाप्रत्यासन्नत्वात्। उदाहृतमन्त्रस्थलेऽपि च न स्वर्गमन्त्रस्य स्वर्गार्थत्वसम्भवः। तद्धि किं दर्शपूर्णमासजन्यस्वर्गव्यक्तिं प्रत्येव मन्त्र-जन्यप्रकाशनस्योपयोग उत स्वर्गव्यक्त्यन्तरं प्रतीति।

नान्त्यः। तथात्वे दर्शपूर्णमासाङ्गत्वाभावात् सामान्यसम्बन्ध-बोधकप्रमाणाभावेन लिङ्गकल्प्यश्रुतेरेवाकल्पनेन स्वर्गार्थत्व एव प्रमाणाभावात्। न च स्वर्गाधिकार एव सामान्यसम्बन्धबोधकं प्रमाणम्। स्वर्गस्य यागाख्यकरणेनैव निराकाङ्क्षतया तदधिकार-स्याकल्पकत्वात्। न च मन्त्रस्य प्रयोजनाकाङ्क्षयैव लिङ्गेन श्रुति-कल्पनं, वाचस्तोमे विनियोगेन निराकाङ्क्षत्वात्। अत एव लिङ्ग-मात्रेणापि न श्रुतिकल्पनम्। पाके समर्थस्यापि देवदत्तस्या-काङ्क्षाऽभावे विनियोगादर्शनात्।

नाद्यः। तथात्वे हि दर्शपूर्णमासजन्यस्वर्गव्यक्तीनां न स्वर्ग-

त्वादिनोद्देश्यता, अतिप्रसङ्गात्। नापि दर्शपूर्णमासफलोपहितस्वर्गत्वेन। तत्फलोपहितस्यापूर्वद्वारकत्वेन* गुरुभूतत्वात्। किं तु विजातीयापूर्वसम्बन्धित्वेनैव। अतएव सन्निपत्योपकारकत्वेऽपि स्वर्गप्रत्यासन्नत्वादपूर्वमपि परमापूर्वमेव, न त्ववान्तरापूर्वमुद्देश्यतावच्छेदककोटिप्रविष्टम्। स्वर्गत्वस्य तु ब्रीहित्वादिवदेवाप्रवेशो गौरवात्। अतश्चैव मन्त्रलिङ्गकल्प्या श्रुतिः, अनेन मन्त्रेण शक्तिजन्यबोधद्वारा परमापूर्वसाध्यं संस्कुर्यात्,—इति। शक्तिजन्यबोधस्य वस्तुतः स्वर्गत्वप्रकारः स्वर्गविशेष्यक एव द्वारतायां शक्तिजन्यबोधत्वेन प्रविष्टः। न तु अपूर्वसम्बन्धित्वप्रकारकः। तथात्वे शक्तिजन्यत्वानुपपत्तेः।

अतएव ब्रह्मवर्चसादौ द्वाराभावात्स्वर्गपदलोपे शक्तिजन्यबोधसिद्ध्यर्थं ब्रह्मवर्चसपदोहः। इतरथा प्रकृतावेव लक्षणया स्वर्गपदेनापूर्वसम्बन्धित्वप्रकारकबोधजनने ब्रह्मवर्चसस्यापि तेनैव रूपेण बोधोपपत्तेरूहानुपपत्तिः। अत एव च पुत्राद्यर्थदर्शपूर्णमासप्रयोगेऽपि मन्त्रलोपः। तथापूर्वसाध्यफलस्य स्वर्गत्वेन बोधानुपपत्तेः। अत एव च मुख्ये एवार्थे मन्त्राणां विनियोग इत्यप्युपपन्नम्। शक्तिजन्यबोधेन चापूर्वसाध्ये ज्ञाततया आधानात्तस्य संस्कार्यत्वं उद्देश्यत्वापरपर्यायं नानुपपन्नम्। तादृशबोधस्य च स्वजन्यश्रद्धाजन्यादृष्टद्वारा परमापूर्व एव फलोत्पत्त्यनुकूलयोग्यताजननात्मक उपयोगो न तु फलोत्पादकत्वम्। तथात्वे समप्राधान्यापत्त्या प्रकरणबाधापत्तेरित्याद्यन्यत्र विस्तरः।

---

* नापि दर्शपूर्णमासोद्देश्यस्वर्गत्वेन। तस्यापूर्व्वद्वारकत्वेन,—इति सो॰ पुस्तके पाठः।

एवमग्न्यादिप्रकाशकमन्त्रेष्वपि स्वतन्त्राग्निप्रकाशनार्थत्वस्यानुपपन्नत्वात् सामान्यसम्बन्धबोधकप्रमाणाभावाच्च पूर्ववत्तत्कल्पनानुपपत्तेरवश्यमाग्नेयसम्बन्ध्यग्निप्रकाशनार्थत्वस्यैव कल्पनीयत्वादाग्नेयस्वरूपे चानर्थक्येन प्रत्यासन्नतया तदुत्पन्नापूर्वीयदेवतात्वेनैवाग्न्यादेरुद्देश्यत्वकल्पना । न तु प्रसादाश्रयत्वेन, प्रसादस्य परमापूर्वजन्यत्वेन विप्रकृष्टत्वात्तदेव प्रयोजकत्वानुपपत्तेः । अतएव नाग्नित्वादेरपि उद्देश्यतावच्छेदककोटिप्रवेशो गौरवात् ।

एवं च प्रसादाश्रयत्वस्याप्युद्देश्यतावच्छेदककल्पनेऽपि ऊहसिद्धिरप्रत्यूहैव । परन्तु प्रसादसामान्याश्रयत्वस्याग्निहोत्रादावतिप्रसङ्गान्नोद्देश्यतावच्छेदकत्वम् । आग्नेयापूर्वजन्यप्रसादाश्रयत्वापेक्षया तदीयदेवतात्वस्य लघुत्वाच्च । अतश्चानेन मन्त्रेण शक्तिजन्यबोधद्वारा आग्नेयोत्पन्नापूर्वीयदेवतां संस्कुर्यात्,—इति लिङ्गकल्प्यश्रुतिं कल्पयित्वा ऊहसिद्धिः पूर्ववदुपपादनीया । उपयोगोऽपि निर्वापादिमन्त्रेषु स्मृतिद्वारेण त्यागकाले झटिति देवतास्मृतिद्वारोत्पन्नापूर्वानुकूलयोग्यतासम्पादन एवेत्यन्यत्र विस्तरः ॥ ९ ॥ १ ॥ ३ ॥

देवतायाः ॥ एवं तावदपूर्वमङ्गीकृत्यैव देवताप्रसादस्य प्रयोजकत्वं निराकृतम् । इह तु तदनङ्गीकृत्य देवताप्रसाद एव प्रयोजकोऽस्तु इत्याशङ्का प्रसङ्गान्निराक्रियते । तत्र देवतायाः सम्प्रदानत्वात्तस्य च कर्मकारकापेक्षयाऽप्यभिप्रेयमाणत्वेन प्राधान्याद्यागस्य पूजारूपस्य तत्संस्कारत्वावगतेस्तस्यास्तोपयोगापेक्षायां स एवैनं भूतिं गमयति, तृप्त एवैनमिन्द्रः प्रजया पशुभिश्च तर्पयतीत्याद्यर्थवादानुसारात्प्रसन्नायाः फलदातृत्वावगतेर्यागस्यैव फलजनकत्वे प्रमाणा-

भावेऽपूर्वसत्त्वे सुतरां प्रमाणाभावः। यद्यपि देवताया अभिप्रेयमाणलोकावपि तस्य ब्राह्मणाय गां ददातीत्यादौ ब्राह्मणस्य फलदातृत्वासम्भवेन उपयोगाभावात्प्राधान्यासम्भवेन प्राधान्यव्यभिचारेण तत्कल्पनानुपपत्तेः। प्रत्युत भावार्थाधिकरणन्यायेन यागकरणिकायां भावनायां भाव्यापेक्षायां स्वर्गस्यैव तत्त्वेनान्वयाद्देवताया अपि संस्कार्यत्वे उद्देश्यानेकत्वनिमित्तवाक्यभेदापत्तेर्देवताया एव यागाङ्गत्वम्।

तथापि यागस्य फलजनकत्वे व्यापारापेक्षायामश्रुतापूर्वकल्पनापेक्षया रात्रिसत्त्ववदार्थवादिकदेवताप्रसादस्यैव द्वारत्वकल्पनात् तत्प्रयुक्तत्वसिद्धिः। प्रसादस्य च विग्रहभोगादिव्यतिरेकेणानुपपत्तेरर्थवादाद्यनुसारेण विग्रहभोगादिकल्पनेऽपि न दोषः इतिप्राप्ते।

प्रसादो हि यदि इच्छारूपस्तदा तस्येच्छात्वेन तत्फलं प्रति कारणत्वे अतिप्रसङ्गापत्तेरवश्यं दर्शादिकर्तुस्तत्फलं भवत्वित्येवमाकारिकेच्छात्वेन तद्वाच्यम्। तथाच कारणावच्छेदके गौरवम्। दर्शादिजन्यफलभोगेऽपि तत्कर्तृत्वानपायादन्यकृतदर्शपूर्णमाससजन्यप्रसादादन्यस्य फलापत्तिश्च। अतस्तत्फलव्यक्तित्वावच्छिन्नं प्रति तद्व्यक्तिकर्तुः सा फलव्यक्तिर्भवत्वित्येवमाकारिकेच्छात्वेन कारणत्वं वाच्यम्। तथा चानेककार्यकारणभावकल्पनं कारणतावच्छेदके गौरवञ्च। किञ्चैतादृशः प्रसादो यदि ब्राह्मणतर्पणान्ते, तदा यागानां नष्टत्वादेवोत्पत्त्यनापत्तिः। यदि तु तत्तद्यागेभ्योऽव्यवधानप्रसादा आग्नेयव्यक्तिकर्तुस्तद्व्यक्तिजन्यं फलं भवत्वित्याकारकाइच्छन्ते, तदा देवानाममोघेच्छत्वस्यार्थवादेषु प्रतिपादनाद्देवादग्नी-

सोमीयाद्यकरणेऽपि फलापत्तिः । अथैतस्यार्थवादत्वमेवाभ्युपगम्य तादृशमहाप्रसादस्य विजातीयेच्छात्वेनैवापूर्वादिन इव विजातीय-फलत्वावच्छिन्नं प्रति कारणता । अवान्तरप्रसादानाञ्च विजातीय-तत्तदिच्छात्वेनैव महाप्रसादं फलं च प्रति कारणता । कारणता-वच्छेदकसम्बन्धश्च स्वजनकयागसमवायित्वं, कार्यतावच्छेदकसम्बन्धश्च फलांशे समवायः । नातः कर्मान्तरे फलापत्तिः । अवान्तरप्रसाद-महाप्रसादयोः परस्परं कार्यकारणभावे प्रत्यासत्तिस्तु उभयत्र स्वजनकयागसमवायित्वमेव । देवतानिष्ठमेव वा तत्कार्यकारणभाव-मङ्गीकृत्य समवाय एव प्रत्यासत्तिरिति चेत् ।

सम्बन्धगौरवस्यैव दोषत्वात् । यागनिष्ठकारणतानिरूपित-कार्यताघटकसम्बन्धस्य भवता निर्वक्तुमशक्यत्वाच्च । मन्मते तु सर्वकार्यकारणभावानां समवाय एव सम्बन्ध इति लाघवम् । एतेन प्रसादो नाम सुखविशेष इत्यपि पक्षः प्रत्युक्तः । न चास्य गौरवस्यार्थवादिके प्रसादाख्ये व्यापारे सिद्धे फलमुखत्वमिति वाच्यम् । अर्थवादस्य स्तावकतयाप्युपपत्तौ स्वतस्तत्कल्पकत्वाभावात् । व्यापारापेक्षायां रात्रिसत्रन्यायेन तद्वाचकपदान्तरकल्पनया तस्य व्यापारत्वकल्पने च व्यापारत्वस्य कारणताघटितत्वेन तस्याः सम्बन्धावगमपूर्वकत्वात्सम्बन्धगौरवस्य फलमुखत्वानुपपत्तेः । अतो-ये तावत्प्रसादादिप्रतिपादका मन्त्रास्ते देवस्य त्वादिमन्त्रवदेव प्रसादादिविशिष्टदेवताप्रकाशनार्थाः सन्तो विशेषणांशे प्रकाशनस्या-दृष्टार्थत्वान्नानुपपन्नाः । वैशिष्ट्यघटकसम्बन्धश्च तद्देवाहार्यो वा अन्यो वेत्यन्यदेतत् । अर्थवादाश्च तेनैव सम्बन्धेन स्तावका इति

तेष्वपि न स्तुतिलक्षणातोऽन्या काचिल्लक्षणा । अस्तु वा सा, तथापि विधौ गौरवापत्तेः सा न दोषाय ।

न चैवं विध्यनपेक्षितत्वादार्थवादिकप्रसादाद्यकल्पनेऽपि लक्षणया प्राशस्त्यतात्पर्यकस्याप्यर्थवादस्यासति प्रमाणान्तरविरोधे स्वप्रत्यार्थेऽपि प्रमाण्याभ्युपगमाद्विग्रहभोगप्रसादादिस्वीकारादपूर्वान्ते एव प्रसादस्वीकरणमस्त्विति वाच्यम् । अन्यतात्पर्यकस्य वाक्यस्यान्यत्र प्रामाण्यायोगात् । अन्यथा शुद्धपुरुषतात्पर्यके यष्टीः प्रवेशयेत्यादौ, परान्नभोजननिवृत्तितात्पर्यके मदं भुंक्ष्वेत्यादौ च प्रमाणान्तराविरोधात्स्वशक्यार्थेऽपि प्रमाण्यापत्तिः । अतः सकृदुच्चरितस्य शब्दस्यानेकार्थबोधकत्वाभावनियमानुरोधेन शाब्दबोधत्वावच्छिन्नं प्रति तात्पर्यज्ञानस्य कारणत्वानुरोधेन चार्थवादानां शक्यार्थे प्रमाण्यानुपपत्तेर्न देवताविग्रहादिस्वीकारः । न च तथापि शक्यार्थविशिष्टप्राशस्त्ये एव लक्षणयार्थवादानां तात्पर्यादिशेषांशेऽपि प्रामाण्योपपत्तिः । लक्ष्यतावच्छेदकगौरवापत्तेः । अन्यथा व्रीहित्वादेरपि विवक्षापत्त्या ऊहानापत्तिः । अतः कथमपि न विग्रहादिस्वीकारः । किन्तु शब्दमात्रं देवता, अर्थस्तु प्रातिपदिकानुरोधाच्चेतनोऽचेतनो वा कश्चित्स्वीक्रियते न तु विग्रहादिमान् । उपासनादौ परं ध्यानमात्रमाहार्थज्ञानस्येति जैमिनिमतनिष्कर्षः । मम त्वेवं वदतोऽपि वाणी दुष्यति । तत्र हरिस्मरणमेव शरणम् ॥ ८ ॥ १ ॥ २ ॥

द्रव्यसङ्ख्या ॥ अत्र मूले द्रव्यसङ्ख्याहेतुसमुदायानां यत्र श्रुत्या उद्देश्यता तत्र व्रीहित्वादिनेव न त्वपूर्वसाधनत्वेन, प्रकरणेन श्रुति-

ऊहोपयोगादित्यत्रापि तद्रूपे चानर्थक्यापत्तेरपूर्वसाधनत्वेनेति सिद्धान्तितम् । तत्र व्रीहीन् प्रोक्षतीति द्रव्योदाहरणस्य चतुर्होत्रा पौर्णमासीमिति समुदायोदाहरणस्य च कथञ्चिल्लाभेऽपि संस्कारो- दाहरणस्य चीन् परिधीनिति मन्त्रस्यागत्य सुवरिति मन्त्रवदपूर्व- साधनीभूतपरिधीयत्ताप्रकाशनार्थत्वस्य सिद्धत्वादनुदाहरणत्वमिति वार्त्तिककारेणैवोक्तम् ।

तथा हेतूदाहरणेऽपि । यत्तु शूर्पेण जुहोति तेन ह्यन्नं क्रियत इति अन्नकरणहेतुना तत्र व्याप्तत्वानाम्नातस्य च सर्वेण प्राधान्यदर्शनादन्नकरणोद्देशेन होमः संस्कारकतया विधीयते इत्याशङ्क्य तृतीयया होमं प्रति शूर्पस्य करणत्वावगतेस्तेन ह्यन्नं क्रियत इत्यस्य यथार्थत्वाद्धोमोऽयमारादुपकारकोऽपूर्वार्थ इति विचारितम् । तद्व्याप्यस्यापि जुह्वादेः क्रतुं प्रति प्राधान्याद्दर्शनादर्थ- वादस्य च हेत्वधिकरणे स्थापितत्वादेतद्विचारस्योहानुपयोगित्वा- न्नोपेक्षितम् । किञ्च सर्वस्यैवास्य विचारस्याद्याधिकरणेन गतार्थते- त्यन्यथा वर्ण्यते ।

यद्यपि यज्ञकर्मेतिसूत्रेण सन्निपत्योपकारकत्वाभावे अपूर्वसाधनत्व- लक्षणा सिद्धा । संस्कारे चेतिसूत्रेण चान्तरालिकानां चामत्वादि- कारणतावच्छेदकानामपि लक्षणा सिद्धा । तथापि श्रुतस्य व्रीहित्वादेः कारणतावच्छेदकस्य त्यागे प्रमाणाभावः । न च युगपद्वृत्तिद्वय- विरोधः । अपूर्वसाधनीभूतव्रीहित्वावच्छिन्नस्यैव लक्षणयोद्देश्यत्वाङ्गी- कारात् । अतश्च तादृशस्य नीवारादावभावान्नोहसिद्धिरिति प्राप्ते ।

कारणतावच्छेदके गौरवापत्तेः श्रुतस्य व्रीहित्वस्य च लक्षणोप-

यौगिकशब्दप्रतिपादकत्वेनापि चरितार्थत्वाच्च विवक्षा। अतएव तत्तद्व्यापारिकायाः विजातीयापूर्वसाधनताया एव लक्षणेति कौस्तुभे स्पष्टम्। तत्तद्व्यापारकसाधनतात्वावच्छिन्नसाधनताया एव लक्षणाच्च व्रीहियवनिष्ठकारणताया गुणादिप्रमाणेन भेदेऽपि यवसाधारण्यलाभोऽपीत्यपि तत्रैव व्यक्तम्। अतश्च व्रीहित्वादेरविवक्षितत्वाद्युक्तो नीवारादिषूहो विकृतौ।

एवं यत्रापि नापूर्वसाधनत्वं व्रीहीनवहन्तीतिवत्पूर्वप्रमितं स्ववाक्य एव तु संस्कारविशिष्टस्य व्रीह्यादेः साधनताविधानं, यथा प्रोक्षिताभ्यामुलूखलमुसलाभ्यामित्यादौ तत्समानजातीयवाक्यान्तरे वा। तत्रापि प्रोक्षणविशिष्टस्य व्रीहित्वविशिष्टस्य च विधेयक्रियाविशेषणत्वेन विधौ कृते पश्चादरुणैकहायनीन्यायेन परस्परान्वयात्प्रकृतौ तज्जातीयस्य प्रोक्षणेऽपि विकृतौ तज्जातीयत्वलोपेऽपि तत्स्थानापन्नद्रव्यान्तर एव प्रोक्षणलाभात्सिध्यति प्रोक्षणं प्रति विशेषणविधिवेलायां अपूर्वसाधनत्वस्यैवोद्देश्यतावच्छेदकत्वम्। लक्षणा परं न तत्रास्ति, व्रीहिपदेन व्रीहित्वस्यैवाभिधानात्। अपूर्वसाधनत्वस्य क्तप्रत्ययेनाभिधानात्।

एवं यत्रापि संस्कारविध्युत्तरं तच्छब्देन संस्कृतस्य विनियोगो यथा तप्ते पयसि इत्यादौ, तत्रापि संस्कारवाक्ये पयस्त्वसमानाधिकरणधर्मावच्छिन्नोद्देशेनैव दध्यानयनविधिः। न तु पयस्त्वावच्छिन्नोद्देशेन। आनर्थक्यात्। स च धर्म उत्पत्तिवाक्ये दृष्टसामान्यमिव सामान्यत एव पयःपदेन प्रथमं प्रतीयते। पश्चाच्च तच्छब्देन पयस्त्वावच्छिन्नस्यापूर्वसाधनत्वे प्रमिते स धर्मोऽपूर्वसाधनत्वरूप-

इति प्रतीयते । तच च पयःपदस्य लक्षणेति पश्चादवगम्यत इति न कश्चिद्विरोधः ।

वस्तुतस्तु यद्यपि सप्तमीश्रवणात्तापविशिष्टपयोधिकरणकदध्यानयनस्य विहितस्य प्रयोजनापेक्षायां उद्देश्यवाचकं पदमनुमीयते, तथापि मन्त्रवर्णाद्यनुरोधादवस्थाविशेषविशिष्टपयोवाच्याभिधापदसमभिव्याहृततच्छब्दबलेन पयस एवोद्देश्यत्वावगतेस्तद्भिन्नविजातीयापूर्वसाधनत्ववाचिपदस्यैव कल्पनात् नाच लक्षणापीति ध्येयम् ॥ ९ ॥ १ ॥ ४ ॥

देशबद्धम् ॥ सोमे, स्वरा वा एषा यज्ञस्य तस्माद्यत्किञ्चित्प्राचीनमग्नीषोमीयात् तेनोपांशु चरन्तीति श्रुतम् । तत्रोपांशुत्वं किं ज्योतिष्टोमसम्बन्ध्यग्नीषोमीयप्राग्भागधर्मः संस्तदीयपरमापूर्वप्रयुक्तम्, उताग्नीषोमीयप्राग्भागवर्त्तितत्तत्पदार्थधर्मः सन् तत्तज्जन्यावान्तरापूर्वप्रयुक्तमिति चिन्तायाम् ।

विधेये उपांशुत्वे उद्देश्यसमर्पकत्वावत्तच्छब्द इत्यविवादम् । स च पूर्वप्रकृतम् अग्नीषोमीयप्राग्भागमेव परामृशति न तु पदार्थान् । प्राचीनशब्दस्याहत्यधिकरणन्यायेन प्राग्भागमात्रवाचित्वात् । एकवचनप्रयोगेन भागस्यैव तदुक्तस्य तच्छब्देन परामर्शाच्च । अतएवैकेनैव तच्छब्देनोद्देश्यसमर्पणात्पूर्वपक्षे सिद्धान्ते वाऽग्नीषोमीयादेर्विशेषणत्वेऽपि न विशिष्टोद्देशः । तच स भागं प्रति अग्नीषोमीयोऽवधित्वेन विशेषणं, यज्ञश्च प्रयोगद्वारा सम्बन्धित्वेन । अतएव यज्ञपदं न स्वराशब्दविशेषणम् । अप्रवृत्तिविशेषकत्वापत्तेः । अस्तु वा तस्मात्पदेन व्यवधानाद्यज्ञस्य ह्यगतिरित्येवमग्नीषो-

प्रणीतादि ॥ इदमधिकरणं सूत्रकारेण पूर्वाधिकरणे अन्तरा-गर्भिणीत्वेन कृतमपि व्याख्यासौकार्यार्थं पृथगभिधीयते । दर्शपूर्ण-मासयोः, यज्ञन्तनिष्यन्तावध्वर्युयजमानौ वाचं यच्छतः यदध्वर्युयज-मानौ वाचं यच्छतस्तत्प्रजापतिभूयङ्गतौ यज्ञं तन्वाते तस्मात्प्रणीताः प्रणेष्यन् वाचं यच्छति तां स हविष्कृता विसृजतीति श्रुतम् ।

तत्रायं वाग्यमः प्रणीताप्रणयनाङ्गमेव विधिवाक्यस्थलृट्प्रत्ययेन तन्मात्रार्थत्वावगमात् । अतो हविष्कृदाह्वानकालावधिकवाग्यमस्य तन्मात्रार्थत्वावगमान्न भागधर्मत्वं न वा तावत्पदार्थधर्मत्वम् । यदि तु प्रणीताः प्रणेष्यन्निति वाक्यस्य वाग्यमोत्पत्तिपरत्वे उत्पत्तिशिष्ट-कर्त्रैकत्वानुरोधेन* तत्र यजमानप्राप्त्यभावात् पूर्ववाक्यस्यार्थवादत्वा-नुपपत्तेर्यजमानमात्रविधानस्य च सुतरामनुपपत्तेरवश्यं यज्ञं तनि-ष्यन्ताविति वाक्यस्यैव वाग्यमविधायकत्वमुच्येत, ततोऽस्तु तत्रत्यलृट्-श्रुत्या यज्ञविस्तारार्थत्वमेव । तदा हि उत्तरवाक्याभ्यां वाग्यमानु-वादेन प्रणीताप्रणयनहविष्कृदाह्वानयोः पूर्वोत्तरावधित्वेन विधौ† ।

अतएव तत्रत्यमेकवचनमपि अनुवाद्यगतत्वाद्ग्रहं संमार्ष्टीतिवद-विवक्षितम् । अतश्च विधेयसामर्थ्यानुसारादुद्देश्यभूतो यज्ञविस्ता-रापरनामधेयो यज्ञभागोऽपि तदवधिक एव । यत्तु मूले पूर्व-पक्षे यज्ञशब्दस्य विस्तारविशेषणत्वमनङ्गीकृत्य भागधर्मत्वमुक्तम् । तत् यज्ञशब्दस्य विस्तारं विनाऽन्यथान्वयस्य दुरुपपादत्वाद्भागवाचक-पदाश्रवणाच्चोपेक्षितम् । अतोऽध्वर्युयजमानकर्तृकवाग्यम एव यज्ञ-

---

* कर्त्रैकत्वावरोधेन,—इति सो० पुस्तके पाठः ।

† विधिः,—इति का० पुस्तके पाठः ।

विस्तारपदवाच्यभागधर्मत्वेन विधीयते । न तु पदार्थधर्मत्वेन, तद्वाचकपदभावात् । अतश्च पूर्वाधिकरणपूर्वपक्षवदेव यज्ञापूर्वप्रयुक्तोभागधर्मश्च वाग्यम इति प्राप्ते ।

यजमानाध्वर्युकर्तृकविशिष्टवाग्यमस्य यज्ञभागार्थत्वे षष्ठविधिप्रकारापत्तेः सन्निपत्योपकारकत्वलाभाय द्वितीयविधिप्रकारलिप्सया चाध्वर्युयजमानसंस्कारकत्वेनैव वाग्यमविधिः । यथा च नैवं सत्युद्देश्यानेकता तथोक्तं यष्टृकत्वाधिकरणे कौस्तुभे । तस्य च दृष्टार्थत्वात्मनःप्रणिधानमेव संस्कारः । संस्कृतयोश्च तयोरुपयोगापेक्षायां तत्तत्प्रमाणकक्रियमाणकर्मार्थत्वमेव क्लृप्तं न तु भागार्थत्वम् ।

न च तयोर्भागोपयोगित्वस्यापि तद्द्वारा कथंचित्सत्त्वाद्यज्ञं तनिष्यन्ताविति विशेषणसामर्थ्याद्यज्ञविस्तारोपयोग्यध्वर्युयजमानसंस्कारकत्वमेव वाग्यमस्य कल्प्यतामिति वाच्यम् । यज्ञं तनिष्यन्तावित्यस्योद्देश्यविशेषणत्वेनाविवक्षितत्वात् । अतश्च हविरभयत्ववद्यज्ञं तनिष्यन्तावित्यनुवादो वाग्यमस्तुत्यर्थः । अतो दृष्टार्थत्वलाभाय पूर्वोत्तरावधिकतावत्पदार्थधर्मत्वमेव । न च सद्गुत्या प्रणीताप्रणयनमात्रार्थत्वमेव कल्प्यतामिति वाच्यम् । हविष्कृदाह्वानावधेरदृष्टार्थतापत्तिभयेन तस्यापि कालोपलक्षणत्वात् । अतः सिद्धं वाग्यमस्यापि तावत्पदार्थधर्मत्वम् ॥९॥१॥६॥

अग्निधर्मः ॥ अग्नौ श्रुते हिरण्यशकलसहस्रेणाग्निं प्रोक्षतीत्यादौ किं अग्निशब्देन संस्थानविशेषसाधनीभूता इष्टका एवोच्यते । तदर्थं च प्रोक्षणम् । उतेष्टकारब्धमवयव्यन्तरमेव अग्निशब्देनोच्यते, तदर्थं च प्रेक्षणमिति चिन्त्यते । तत्र, यच्चैकावयवाकर्षणेनेत-

रवयवाकर्षणं यच च न कश्चिद्दर्शनं तथैव शरीरघटादावयव-
व्यन्तराभ्युपगमः। न चैकैकेष्टकाकर्षणेनेतरेष्टकाकर्षणम् कश्चिच्च
पुरीषच्छन्नानामपीष्टकानामनुमानेन दृश्यत एव। अतो व्यापका-
भावात्पञ्चमसंयोगो न द्रव्यान्तरमिति। काम्यपक्षनाशाद्यनन्तरे
प्रमाणाभावादिष्टकासंस्कारार्थमेव प्रोक्षणम्। यत्तु इष्टकात्वसमा-
नाधिकरणमेवापूर्वसाधनत्वमग्निपदेन लक्ष्यत इति तन्न प्रत्येक-
इतिनियमादिष्टकं प्रोक्षणमित्यपि सिद्धं भवति। न चैवं व्रीहि-
णां प्रोक्षणादावपि प्रत्येकं तदापत्तिः। न्यायतस्तथापत्तावपि अग्नये
वो जुष्टं प्रोक्षामि शुन्धध्वमिति मन्त्रे बहुवचनोपादानमनेक
तन्त्रत्वप्रतीतेः। प्रकृते तु तादृशमन्त्राभावात्प्रत्येकमेवेति प्राप्ते।

एतावदवयवाकर्षणेनेतरावयवाकर्षणस्य नावयविव्यापकत्वं, नापि
सम्बन्धदर्शनस्य। कुम्भपटादौ व्यभिचारात्। अतो यत्रैकाकार-
प्रतीतिरबाधिता तत्रैवावयविस्वीकारः। इतरथा इष्टकाया अपि
स्वीकारे प्रमाणाभावः। काम्यपीयस्तु वचनं मूलाभावादनादर-
णीयम्। वनमित्यादौ तु बाधिता एकाकारप्रतीतिः। अतश्चाग्निपदे-
नावयविन एवोक्तत्वात्तदर्थमेव प्रोक्षणं, तच्च चैकत्वात्सकृदेव प्रोक्षणम्।

न चैवमग्निस्वरूपे* आनर्थक्योऽपूर्वसाधनीभूताग्न्याधारत्व-
लक्षणायां यवेष्विवोत्तरवेद्यामपि हिरण्यशकलप्रक्षेपधर्मापत्तिः।
इष्टकादिसम्पादितलौकिकस्वरूपविशेषे अग्न्यादिपदप्रयोगाभावेना-
दृष्टविशेषावच्छिन्नस्वरूपविशेषस्यैवाग्न्युत्तरवेद्यादिशब्दाभिधेयत्वात्तच्च

* न चैवमवयविस्वरूपे,—इति सो॰ पुस्तके पाठः।

चानर्थक्याभावेनापूर्वसाधनत्वलक्षणाया एवाभावात्। अतश्च नाग्न्युत्तरवेदिधर्म्माणां सांकर्य्यम्। न चैवं उत्तरवेदिधर्म्माणां अग्नौ अतिदेशकथनं सङ्कर्षे विरुध्येतेति वाच्यम्। देशवदग्नौ बहुतरवैशेषिकधर्म्माम्नानेपि अपेक्षितद्रविधानपूर्वदेशवर्त्तित्वादिकतिपयधर्म्माणां स्थानापत्त्यतिदेशेनोत्तरवेदितः प्राप्तेरविरोधात्। उत्तरवेद्यां तु यावदपेक्षितधर्म्मसाकल्यान्न वैपरीत्याशङ्का।

अतश्च प्रकृतौ तत्प्रोक्षणादिधर्म्माणामग्न्युत्तरवेदिसाधारणार्थत्वेऽपि यत्र विकृतौ तदुभयकार्य्यापन्नं उक्तपरिमाणं स्वतःसिद्धभूमिकं तद्बहिः खातभूमिकं स्थण्डिलं अग्न्याधारत्वेन समाम्नातं, तत्र प्रोक्षणादीनामूहसिद्धिः। संस्थानविशेषोपधायकक्रियासाधनीभूततदवयवार्थत्वपूर्वपक्षे तु उक्तविकृतौ तदभावान्न प्रोक्षणादीति ऊहविचारोपयोगित्वं चास्याधिकरणस्य। यदि चैवंविधविकृतिर्न सम्भाव्यते, तदा क्त्वाचिन्तया उदाहरणान्तरे वा ऊहोपयोगोनुसन्धेयः। प्रासङ्गिकं चेदमधिकरणम् ॥९॥१॥७॥

पत्नीसंयाजान्तत्वम् ॥ द्वादशाहे पत्नीसंयाजान्तान्यहानि सन्तिष्ठन्ते असंस्थितो हि तर्हि* यज्ञ इति श्रुतम्। तत्र किं पत्नीसंयाजान्तत्वं द्वादशस्वप्यहःसु विधीयते, उत उत्तमवर्ज्जमिति चिन्तायां, अहस्त्वाविशेषात् सर्व्वेषु। न चासंस्थायाः पत्नीसंयाजान्तत्वे हेतुत्वावगमात्तस्योत्तमवर्ज्जमेव सत्त्वेन तत्रैव पत्नीसंयाजान्तत्वावगतिः। एतस्य, तेन ह्यन्नं क्रियत इतिवद्धेत्वर्थवादत्वेनाहेतुत्वात्। न च

* तर्हि,–इति नास्ति का॰ पुस्तके।

तर्हि तेनैवाक्ताः शर्करा इतिवन्निर्णयः । तद्वदिह सन्दिग्धत्वाभावेन तस्यानिर्णायकत्वात् । सत्युद्देश्ये गुणस्यावश्यकत्वेन अविशेषप्रवृत्त-विधेरर्थवादेन सङ्कोचानुपपत्तेश्च । अतस्त्वार्थवादोऽपि बहुदिन-साध्यत्वाच्चिरसंस्थाभिप्रायेण गौण्या वृत्त्या व्याख्येयः ।

ननु विधेरेव स्वस्य नियमविधित्वलाघवानुरोधेनोत्तमभिन्नविषयत्वं प्रतीयते । तथा हि द्वादशानामप्यह्नां एकफलसाधनत्वात्प्रयोगैक्य-मवगम्यते । अत एवाग्नीषोमीयान्तपदार्थानां तन्त्रेण करणम् । अवभृथाद्यानां च ब्राह्मणतर्पणान्तानाम् । अहःशब्दवाच्यसुत्यानां तु द्वादशत्वसंख्यानुरोधादावृत्तिः । अहःशब्दो हि उपांशुग्रहाभ्या-सादारभ्य हारियोजनयागाभ्यासपर्यन्ते प्रयोगे लक्षणया याज्ञिकानां प्रसिद्धः । अतएव तन्मध्यवर्त्तीनि सन्निपत्योपकारकाणि आराद्दुप-कारकाणि चाङ्गानि प्रतिसुत्यमावर्त्तन्त इति वक्ष्यते । एवञ्च एकैकमहर्यस्मिन् कस्मिंश्चिदह्न्यनियमेन समाप्यापरमहरारभणीय-मिति प्राप्ते ।

पत्नीसंयाजान्तत्वविधिरेकादशसु नियमविधिः सम्पद्यते । अन्तिमे तु सर्वस्यैव समापनीयत्वात् पत्नीसंयाजान्तत्वविधिरपूर्व-विधिरापद्येत । अतश्च सर्वार्थत्वे अपूर्वविधिनियमविधित्ववैरूप्या-पत्तेर्नियमविधित्वलाघवानुरोधेनोत्तमवर्जमयं विधिरिति चेत् ।

द्वादशत्वसंख्यानुरोधेनाहःशब्दवाच्यहारियोजनान्तप्रयोगस्यैवावर्त्त-नीयत्वेन तद्भिन्नाङ्गे यस्मिन् कस्मिंश्चित्समापनस्यैवाप्रसक्तौ सर्वत्रैवा-पूर्वविधित्वात् । पत्नीसंयाजानां हारियोजनोत्तरमेव सर्वाध्वर्यु-शाखाम्नानेन पत्नीसंयाजानामपि अवभृथादिवत्तन्त्रेणानुष्ठेय-

ज्ञान्तेषु पक्षेपि समापनस्याप्रसक्तेश्च। अतएव शास्त्रदीपिकायामन्यत्र च पत्नीसंयाजोत्तरत्वकथनं शार्योजनस्य निर्मूलमेव। अतएवाचत्याहःशब्दस्य शार्योजनान्तप्रयोगवाचकस्य पत्नीसंयाजान्ते प्रयोगैकदेशे लक्षणेति केषाञ्चिदुक्तमपास्तम्। स्वयमेव पत्नीसंयाजानां शार्योजनोत्तरत्वोक्तत्वेनैकदेशलक्षणाया अनुक्तिसद्भावात्। अतः सर्वाण्येवाङ्गानि पत्नीसंयाजान्तानि कार्याणि। न तु अवभृथादीनि अन्ते तन्त्रेण कार्याणि। पत्नीसंयाजान्तत्वविधिना तेषां पर्युदासात्। पत्नीसंयाजानाञ्च तन्त्रेण प्रसक्तानामावृत्तिरूपफलप्रतिपादनादिति प्राप्ते।

असंस्थितो हि तर्हि यज्ञ इति तेन स्वगं क्रियते इति वच हेत्वर्थवादः। तद्वदिह हेतुविधित्वे लक्षणाऽभावात्। तत्र तु होमकालीनवर्त्तमानाकरणत्वस्य बाधितत्वाद्घटो भूतार्थकत्वे विधौ लक्षणापत्तेरगत्या हेत्वर्थवादत्वाङ्गीकरणम्। अतो न स्वानूयाजान् यज्ञन् भवतीतिवदस्य हेतुपरत्वादसंस्थाहेतुकपत्नीसंयाजान्तत्वविशिष्टसमापनभावनाया एवाहवद्देशेन विधानाद्विधेयसामर्थ्यानुरोधेनोद्देश्यानामङ्गानां सङ्कोचोपपत्तेः, उत्तमे चासंस्थारूपहेत्वभावात् पत्नीसंयाजान्तत्वस्याप्यभावोपपत्तेरुत्तमवर्ज्जं पत्नीसंयाजान्तता।

न च हेत्वभावेऽपि व्यापकव्यभिचारस्यादोषत्वादुत्तमे पत्नीसंयाजान्तत्वेप्यदोषः। विशेषणाभावप्रयुक्तविशिष्टाभावात् साधकप्रमाणाभावेनैव तत्र तस्यासिद्धेः। अस्तु वा हिशब्दोच अव्ययानामनेकार्थत्वान्निमित्तत्वपरः। तथा चान्तिमे निमित्ताभावान्नैमित्तिकाभावः सुलभ एव।

एवं च निमित्तोपादानबलाद्यथैव द्वादशाहे अन्तिमेऽहनि न पत्नीसंयाजान्तत्वं, तथैव पञ्चदशरात्रादौ द्वादशेऽहनि न पत्नीसंयाजान्तत्वं, द्विरात्रादौ च द्वितीयादिस्वरूपएवान्तिमे न तदित्यूहोपयोगिता बाधोपयोगितापि। अत एव प्रकृतौ तद्विजातीयापूर्वसाधनत्वस्यैवाहःपदेन लक्षणायामपि विकृतौ निमित्ताभावादेव न पत्नीसंयाजान्तत्वम्, निमित्तोपादानबलेन वा प्रकृतावसंस्थावत्कालपूर्वसाधनत्वस्यैव लक्षणान्न कोऽपि दोषः ॥९॥१॥८॥

अभ्यासः ॥ दर्शपूर्णमासयोः सामिधेन्यवान्तरप्रकरणे त्रिः प्रथमामन्वाह त्रिरुत्तमामिति श्रुतम्। तत्रानुवचनं तावत्प्रकरणप्राप्तमनूद्यते त्रिरभ्यासमात्रं तु विधीयते प्रथमामिति चोद्देश्यसमर्पकमित्यविवादमेव। तच्च प्रथमामिति विशेष्यनिष्ठं प्राथम्यविशिष्टमभिधत्ते। शुक्लादिपदवत्। तच्च विशेष्यं स्त्रीलिङ्गनिर्देशात् सामिधेनीप्रकरणाच्च ऋगेव। प्राथम्यरूपविशेषणयोगाच्च ऋग्विशेषप्रतीतिरार्थिकी। न तु प्रवोवाजादित्वप्रकारिकोपस्थितिः शाब्दी, तद्वाचकपदाभावात्। अत एव प्राथम्यमेवोद्देश्यतावच्छेदकं ग्रहत्वादिवत्। न तु तदुपलक्षितप्रवोवाजादित्वम्, विना कारणं लक्षणायां प्रमाणाभावादित्यविवादमेव।

इदं तु विचार्यते। प्रथमास्वरूपे आनर्थक्ये प्रसक्ते अपूर्वसाधनत्वलक्षणायां अपूर्वसाधनीभूताग्निसमिन्धनप्रकाशकत्वमात्रलक्षणे अतिप्रसङ्गापत्तेस्तन्निराकरणार्थं किमुद्देश्यतावच्छेदककोटौ ऋक्त्वविशेषणतया प्रवोवाजादित्वस्य विवक्षणमुत प्राथम्यस्येति चिन्तायाम्।

प्राथम्यरूपस्य श्रुतस्योद्देश्यतावच्छेदकस्य व्रीहित्वादिवदपूर्व-साधनत्वलक्षणोपयोगिशक्त्योपस्थितत्वानुपक्षीणत्वेन निरुक्तापूर्वसाधनत्व-रूपोद्देश्यतावच्छेदककोटिप्रवेशे प्रमाणाभावात्प्रवोवाजात्वमेवर्त्क्-विशेषणम् । अतश्च विकृतौ यत्रतत्रस्था प्रवोवाजैव चिरभ्यसितव्या न प्रथमस्थानपतितं स्वगन्तरमिति प्राप्ते ।

अतिप्रसङ्गपरिहारार्थमवश्यकल्प्ये केनचित्तत्तद्व्यापारकसाधन-त्वातिरिक्तेन विशेषणे उपस्थितत्वादुपक्षीणेनापि प्राथम्येनैव विशेषणम्, न त्वनुपस्थितेन प्रवोवाजात्वेन । अवघातादौ तु तण्डुलनिष्पत्तिव्यापारकसाधनतामात्रेणैवोद्देश्यत्वपर्यवसानाद्यवानां धर्माकाङ्क्षाबलेन यवसाधारण्यकल्पनेऽपि च वाक्यवैयर्थ्याभावाना-तिप्रसङ्गपरिहारार्थं व्रीहित्वप्रवेशः । प्रकृते तु अतिप्रसङ्गाङ्गीकारे प्रथमोत्तमापदघटितवाक्यद्वयवैयर्थ्यापत्तेस्ताः पञ्चदश सम्पद्यन्ते इत्यर्थवादानुपपत्तेश्च विशेषणविवक्षा आवश्यकी । अतश्च या काचित् प्रथमोत्तमा चिरभ्यसितव्येत्यूहोपयोगोऽपि ॥९॥१॥९॥

इष्ट्यावृत्तौ ॥ दर्शपूर्णमासयोर्दर्शपूर्णमासावारप्स्यमानोऽन्वारम्भणी-यामिष्टिं निर्वपेदिति श्रुतम् । तच्च न तावदियं प्रकरणात्प्रयाजादि-वत्प्राचात् क्रत्वर्था । दर्शपूर्णमासावारप्स्यमान इति पदद्वयवैयर्थ्यापत्तेः । नापि वक्ष्यमाणे आरम्भे निमित्ते भेदनहोमादिवन्नैमित्तिकी । क्रिया-र्थायां क्रियायामुपपदे विहितेन लृट्प्रत्ययेनास्या आरम्भार्थत्वप्रती-तेरिति तावदविवादम् । आरम्भशब्दार्थश्चोद्देश्यकोटिप्रविष्टः क इति चिन्त्यते । प्रतिप्रयोगमावृत्त्यनावृत्ती तु सूत्रकाराद्युक्ते अपि फल-मिति नेहाधिकरणशरीरम् । एकादशोपयुक्तत्वेनोहानुपयुक्तत्वात् ।

तत्राग्न्यन्वाधानादिरूपे प्रथमपदार्थे याज्ञिकानां दर्शपूर्णमासा-रम्भत्वप्रसिद्धेरग्न्यन्वाधानमेव तत्त्वेनारम्भपदार्थः । तदर्था चान्वारम्भ-णीया तत्कार्यप्रयुक्ता । न तु प्रथमपदार्थत्वेन रूपेण प्रथमपदार्था-र्थम् । येन पूर्ववदग्न्यन्वाधानरहितायां विकृतावारम्भाङ्गतयोच्येत । न चान्वाधानस्याप्रवृत्तप्रवर्त्तनविषयत्वेनैवारम्भपदवाच्यता नान्वा-धानत्वेनेति कथं न पूर्वाधिकरणविषयत्वमिति वाच्यम् । अन्वाधाने दर्शपूर्णमासविषयकाप्रवृत्तप्रवर्त्तनविषयत्वस्य बाधितत्वात् ।

तथा हि दर्शपूर्णमासविषयकप्रवृत्तिसामान्याभाववतः पुरुषस्य या दर्शपूर्णमासविषयिणी प्रवृत्तिस्तद्विषयत्वं तत् । न तु निरुक्त-पुरुषस्य यत्किञ्चिद्विषयप्रवर्त्तनविषयत्वम् । तस्याधानभोजनादावपि सत्त्वेनातिप्रसक्तत्वात् । अतश्च निरुक्तपुरुषनिष्ठदर्शपूर्णमासविषयक-कृतिविषयत्वं दर्शपूर्णमासयोरेव नान्वाधाने । अङ्गप्रधानभेदेन तत्तद्विषयकृत्योर्भेदात् । न चात्र दर्शपूर्णमासकरणिका भावना श्रुता । ता उपांशु कर्त्तव्या इति बहुतीथानिर्देशेन दर्शपूर्णमास-कर्मककृतेरेवारम्भपदार्थघटकत्वस्य त्वया वाच्यत्वात् । अन्वाधाने तस्य बाधाद्याज्ञिकप्रसिद्ध्या रूढिरेव तत्रारम्भपदस्य । द्वितीया च षष्ठ्यर्था सती अनुवादः । ततश्च तदर्थान्वारम्भणीया न तद्रहितायां विकृतावुत्कृष्या । अतोऽन्वाधानस्य प्रतिदर्शपूर्णमासप्रयोगमावृत्ते-रावर्त्तनीया चेति प्राप्ते ।

वृत्तिकारेण तावदेवं सिद्धान्तितम् । नान्वाधानमारम्भपदार्थः तदभावेऽपि देवतास्चैवं यज्ञमारभत इति ज्योतिष्टोमे आरम्भ-शब्दप्रयोगात् । किन्तु इदं मया कर्तव्यमिति सङ्कल्पापरपर्यायो-

ऽध्यवसायविशेषः। तदर्थान्वारम्भणीयान्वाधानरहितायामपि विकृतौ सत्त्वात्कर्तव्यैव। प्रकृतौ चान्वाधानोत्तरं सर्वयावज्जीविकप्रयोगाणां सकृदेव सङ्कल्पकरणात् सकृदेवान्वारम्भणीयेति।

तत्र, तत्तत्कालावस्थिततत्तज्जीवनाख्यनिमित्तवशेन तत्तन्नैमित्तिकप्रयोगाणां तत्तत्काल एवोपस्थितत्वेनाध्यवसायापत्तौ सर्वसाधारणाध्यवसाये प्रमाणाभावात्। तत्र यथैवैकस्मिन् पुत्रे जाते वैश्वानरीं निरूप्य पुत्रान्तरजन्मनि पुनर्निर्वापे नाध्यवसायैक्यं, तद्वदिहाप्यध्यवसायभेदात् सकृत्करणानापत्तिः।

तस्मादेवं भाष्यकारादिभिः सिद्धान्तितम्। नाध्यवसायवाच्यप्यारम्भशब्दः। तथाप्यप्रवृत्तप्रवर्तनविषयत्वेनैवारम्भशब्दप्रयोगात्। अतोऽप्रवृत्तप्रवर्तनमेवारम्भः तद्विषयत्वात् तु पदार्थेष्वारम्भशब्दप्रयोगः। अतस्तदर्थाऽन्वारम्भणीया। सापि न साक्षादपि तु ज्ञानचा कर्तुरुपास्यत्वात् अञ्जभ्यमानवत् कर्तारमारम्भयोग्यं करोतीति तद्द्वारा आरम्भार्था।

यद्यपि च दर्शपूर्णमासाविति द्वितीयाया विषयत्वार्थकत्वाद्दर्शपूर्णमासविषयकाप्रवृत्तप्रवर्तनविषयत्वस्य च दर्शपूर्णमासाख्यप्रधानस्यैव सम्भवात् ततः पूर्वं प्रयोगमध्ये एवारम्भणीयानुष्ठेयेत्यर्थो दर्शपूर्णमासावारप्स्यमान इत्यस्य प्राप्नोति, तथापि उक्तार्थस्य पाठादेव प्राप्तेः पदद्वयवैयर्थ्यप्रसङ्गेन द्वितीयोद्देश्यत्वपरा*। तेनाङ्गविषयप्रवृत्तेरपि प्रधानोद्देश्यकत्वाविघाताद्दर्शपूर्णमासोद्देश्यकाप्रवृत्तप्रवर्तनविषयत्वं तत्प्रथमप्रयोगीयाद्यपदार्थ एवेति तदङ्गमारम्भणीया।

* द्वितीयोद्देश्यपरा,— इति सो० पुस्तके पाठः।

तथाहि उक्तविधप्रवर्तनविषयत्वं दर्शपूर्णमासोद्देश्यकप्रवृत्ति-ध्वंसासमानकालीनतदुद्देश्यकप्रवृत्तिविषयत्वम्। तच्च न दर्शपूर्ण-मासीयप्रथमप्रयोगाद्यपदार्थभिन्ने सम्भवति। तदितरस्य सर्वस्य तदुद्देश्यकस्य तादृशध्वंससमानकालीनत्वात्। अतश्च दर्शपूर्णमासपदे अपूर्वसाधनलक्षणायां तत्पदार्थरहितायां तादृशप्रथमप्रयोगीया-द्यपदार्थान्तरवत्यां विकृतावूहितस्यैवान्वारम्भणीया। रूटश्रुत्या च तादृशप्रथमपदार्थप्रागभावविधानात्प्रयोगवहिर्भावसिद्धिः। द्वितीयादिप्रयोगे चोक्तविधधर्मावच्छिन्नपदार्थाभावादकरणम्।

अत्र हि दर्शपूर्णमासयोर्न तत्तद्व्यक्तित्वेन प्रवृत्तिं प्रत्युद्देश्यता। येन तद्व्यक्तित्वावच्छिन्नोद्देश्यकप्रवृत्तिध्वंसासमानकालीनतद्व्यक्त्युद्देश्यक-प्रवृत्तिविषयत्वाद्द्वितीयप्रयोगीयाद्यपदार्थत्वेनापि सा स्यात्। दर्शपूर्णमासाविति श्रवणात्तु दर्शपूर्णमासत्वमेवोद्देश्यतावच्छेदकम्। आवश्यकी चोभयत्रापि प्रवृत्तिनिरूपितोद्देश्यतावच्छेदकविवक्षा। इतरथा सामान्यतो विहितक्रिया मे जायतामित्याकारको-द्देश्यतया गङ्गास्नानप्रवृत्तावपि दर्शपूर्णमासोद्देश्यकप्रवृत्तित्वात्तत्राप्या-रम्भणीयापत्तेः।

अतोदर्शपूर्णमासत्वावच्छिन्नोद्देश्यताकप्रवृत्तिध्वंसासमानकालीन-तदवच्छिन्नोद्देश्यताकप्रवृत्तिविषयत्वेनैव प्रथमपदार्थस्य उद्देश्यता। अत्र सामान्याकारेच्छया गङ्गास्नानानुष्ठानोत्तरमाद्यदर्शपूर्णमास-प्रयोगेप्यन्वारम्भणीया न स्यात्। अतः प्रथमावच्छेदकविवक्षा। दर्शपूर्णमासाकरणेप्युक्तविधेच्छया गङ्गास्नानकरणे तदापत्तेर्द्वितीया-वच्छेदकविवक्षा। वस्तुतस्तु दर्शपूर्णमासौ मे जायेतामित्याकार-

| | Rs. | As. |
|---|---|---|
| Nyayabindutīkā, (Text) ... | 0 | 10 |
| Nyāya Kusumāñjali Prakaraṇa (Text) Vol. I, Fasc. 1-6; Vol. II, Fasc. 1-3 @ /6/ each ... | 3 | 6 |
| Padumawati Fasc. 1 and 2 @ 2/ ... | 4 | 0 |
| Pariçiṣta Parvan, (Text) Fasc. 1-5 @ /6/ each ... | 1 | 14 |
| Prithivirāj Rāsa, (Text) Part II, Fasc. 1-5 @ /6/ each ... | 1 | 14 |
| Ditto (English) Part II, Fasc. 1 ... | 0 | 12 |
| Prākṛta Lakṣaṇam, (Text) Fasc. 1 ... | 1 | 8 |
| Parāçara Smṛti, (Text) Vol. I, Fasc. 1-8; Vol. II, Fasc. 1-6; Vol. III, Fasc. 1-5 @ /6/ each ... | 7 | 2 |
| Parāçara, Institutes of (English) ... | 0 | 12 |
| *Sāma Vēda Saṁhitā, (Text) Vols. I, Fasc. 5-10; II, 1-6; III, 1-7; IV, 1-6; V, 1-8, @ /6/ each Fasc. ... | 12 | 6 |
| Sāṇkhya Sūtra Vṛtti, (Text) Fasc. 1-4 @ /6/ each ... | 1 | 8 |
| Ditto (English) Fasc. 1-3 @ /12/ each ... | 2 | 4 |
| Suçruta Saṁhitá, (Eng.) Fasc. 1 @ /12/ ... | 0 | 12 |
| *Taittereya Saṁhitā, (Text) Fasc. 11-42 @ /6/ each ... | 12 | 0 |
| Tāṇḍya Brāhmaṇa, (Text) Fasc. 1-19 @ /6/ each ... | 7 | 2 |
| Tattva Cintāmaṇi, (Text) Vol. I, Fasc. 1-9, Vol. II, Fasc. 1-10, Vol. III, Fasc. 1-2, Vol. IV, Fasc. 1, Vol. V, Fasc. 1-5, Part IV, Vol. II, Fasc. 1-7 @ /6/ each ... | 12 | 12 |
| Trikāṇḍa-Maṇḍanam, (Text) Fasc. 1 & 2 @ /6/ ... | 0 | 12 |
| Tul'si Sat'sai, (Text) Fasc. 1-5 @ /6/ each ... | 1 | 14 |
| Uvāsagadasāo, (Text and English) Fasc. 1-6 @ /12/ ... | 4 | 8 |
| Varāha Purāṇa, (Text) Fasc. 1-14 @ /6/ each ... | 5 | 4 |
| *Vāyu Purāṇa, (Text) Vol. I, Fasc. 2-6; Vol. II, Fasc. 1-7, @ /6/ each ... | 4 | 8 |
| Viṣṇu Smṛti, (Text) Fasc. 1-2 @ /6/ each ... | 0 | 12 |
| Vivādaratnākara, (Text) Fasc. 1-7 @ /6/ each ... | 2 | 10 |
| Vṛhannāradīya Purāṇa, (Text) Fasc. 1-6 @ /6/ ... | 2 | 4 |
| Vṛhat Svayambhū Purāṇa, Fasc. 1 to V ... | 1 | 14 |

*Tibetan Series.*

| | Rs. | As. |
|---|---|---|
| Pag-Sam Ṭhi S'iñ, Fasc. 1-4 @ 1/ each ... | 4 | 0 |
| Sher-Phyin, Vol. I, Fasc. 1-5; Vol. II, Fasc. 1-3; Vol. III, Fasc. 1 to 4, @ 1/ each ... | 12 | 0 |
| Rtogs *brjod dpag ḥkhri* S'iñ (Tib. & Sans.) Vol. I, Fasc. 1-5; Vol. II. Fasc. 1-5 @ 1/ each ... | 10 | 0 |

*Arabic and Persian Series.*

| | Rs. | As. |
|---|---|---|
| 'Ālamgīrnāmah, with Index, (Text) Fasc. 1-13 @ /6/ each... | 4 | 14 |
| Al-Muqaddasi (English) Vol. I, Fasc. 1 ... | 0 | 12 |
| Āin-i-Akbarī, (Text) Fasc. 1-22 @ 1/ each ... | 22 | 0 |
| Ditto (English) Vol. I, Fasc. 1-7, Vol. II, Fasc. 1-5, Vol. III Fasc. 1-5, @ 1/12/ each ... | 29 | 12 |
| Akbarnāmah, with Index, (Text) Fasc. 1-37 @ 1/ each ... | 37 | 0 |
| Ditto English Fasc, I-III @ 1/ each ... | 3 | 0 |
| Arabic Bibliography, by Dr. A. Sprenger ... | 0 | 6 |
| Bādshāhnāmah, with Index, (Text) Fasc. 1-19 @ /6/ each ... | 7 | 2 |
| Catalogue of the Persian Books and Manuscripts in the Library of the Asiatic Society of Bengal. Fasc. 1-3 @ 1/ each ... | 3 | 0 |
| Dictionary of Arabic Technical Terms, and Appendix, Fasc. 1-21 @ 1/ each ... | 21 | 0 |
| Farhang-i-Rashīdī, (Text) Fasc. 1-14 @ 1/ each ... | 14 | 0 |
| Fihrist-i-Ṭūsī, or, Ṭūsy's list of Shy'ah Books, (Text) Fasc. 1-4 @ /12/ each ... | 3 | 0 |
| Futūḥ-ush-Shām of Wāqidī, (Text) Fasc. 1-9 @ /6/ each ... | 3 | 6 |
| Ditto of Āzādī, (Text) Fasc. 1-4 @ /6/ each ... | 1 | 8 |
| Haft Āsmān, History of the Persian Masnawi, (Text) Fasc. 1 ... | 0 | 12 |
| History of the Caliphs, (English) Fasc. 1-6 @ /12/ each ... | 4 | 8 |
| Iqbālnāmah-i-Jahāngīrī, (Text) Fasc. 1-3 @ /6/ each ... | 1 | 2 |
| Iṣābah, with Supplement, (Text) 51 Fasc. @ /12/ each ... | 38 | 4 |
| Maāṣir-ul-Umarā, Vol. I, Fasc. 1-9, Vol. II, Fasc. 1-9; Vol III, 1-10 Index to Vol. I Fasc. X & XI & Index to Vol. III, Fasc. XI & XII Index to Vol. II, Fasc. X, XI & XII @ /6/ each ... | 13 | |

* The other Fasciculi of these works are out of stock, and complete copies cannot be supplied.

| | | |
|---|---|---|
| Maghāzi of Wāqidī, (Text) Fasc. 1–5 @ /6/ each ... Rs. | 1 | 14 |
| Muntakhabu-t-Tawārīkh, (Text) Fasc. 1–15 @ /6/ each ... ... | 5 | 10 |
| Muntakhabu-t-Tawārīkh, (English) Vol. I, Fasc. 1–7; Vol. II, Fasc. 1–5 @ /12/ each ... ... ... ... ... | 9 | 0 |
| Muntakhabu-l-Lubāb, (Text) Fasc. 1–19 @ /6/ each ... ... | 7 | 2 |
| Ma'āṣir-i-'Ālamgīrī, (Text), Fasc. 1–6 @ /6/ each ... ... | 2 | 4 |
| Nukhbatu-l-Fikr, (Text) Fasc. 1 ... ... ... ... | 0 | 6 |
| Niẓāmī's Khiradnāmah-i-Iskandari, (Text) Fasc. 1 and 2 @ /12/ each | 1 | 8 |
| Riyāẓu-s-Salātīn, (Text) Fasc. 1–5 @ /6/ each ... ... ... | 1 | 14 |
| *Suyūṭy's Itqān, on the Exegetic Sciences of the Koran, with Supplement, (Text) Fasc. 7–10 @ 1/ each ... ... ... | 4 | 0 |
| Ṭabaqāt-i-Nāṣirī, (Text) Fasc. 1–5 @ /6/ each ... ... ... | 1 | 14 |
| Ditto (English) Fasc. 1–14 @ /12/ each ... ... | 10 | 8 |
| Ditto Index ... ... ... ... | 1 | 0 |
| Tārīkh-i-Fīrūz Shāhi of Ẓiyāu-d-dīn Barni (Text) Fasc. 1–7 @ /6/ each... | 2 | 10 |
| Tārīkh-i-Fīrūzshāhi, of Shams-i-Sirāj Aif, (Text) Fasc. 1–6 @ /6/ each... | 2 | 4 |
| Ten Ancient Arabic Poems, Fasc. 1 & 2 @ 1/8/ each ... ... | 3 | 0 |
| Wis o Rāmīn, (Text) Fasc. 1–5 @ /6/ each ... ... ... | 1 | 14 |
| Ẓafarnāmah, Vol. I, Fasc. 1–9, Vol. II, Fasc. 1–8 @ /6/ each .. | 6 | 6 |
| Tuzuk-i-Jahāngīrī, (Eng.) Fasc. 1 ... ... ... ... | 0 | 12 |

## ASIATIC SOCIETY'S PUBLICATIONS.

| | | | |
|---|---|---|---|
| 1. | ASIATIC RESEARCHES. Vol. VII, Vols. XIII and XVII, and Vols. XIX and XX @ 10/ each ... ... ... | 50 | 0 |
| 2. | PROCEEDINGS of the Asiatic Society from 1865 to 1869 (incl.) @ /6/ per No.; and from 1870 to date @ /8/ per No. | | |
| 3. | JOURNAL of the Asiatic Society for 1843 (12), 1844 (12), 1845 (12), 1846 (5), 1847 (12), 1848 (12), 1866 (7), 1867 (6), 1868 (6), 1869 (8), 1870 (8), 1871 (7), 1872 (8), 1873 (8) 1874 (8), 1875 (7), 1876 (7), 1877 (8), 1878 (8), 1879 (7), 1880 (8), 1881 (7), 1882, (6), 1883 (5), 1884 (6), 1885 (6), 1886 (8), 1887 (7), 1888 (7), 1889 (10), 1890 (11), 1891 (7), 1892 (8), 1893 (11), 1894 (8), 1895 (7), 1896 (8), 1897 (8), @ 1/8 per No. to Members and @ 2/ per No. to Non-Members. | | |
| | *N. B.—The figures enclosed in brackets give the number of Nos. in each Volume.* | | |
| 4. | Centenary Review of the Researches of the Society from 1784–1883 ... | 3 | 0 |
| | General Cunningham's Archæological Survey Report for 1863–64 (Extra No., *J. A. S. B.*, 1864) ... ... ... ... ... | 2 | 0 |
| | Theobald's Catalogue of Reptiles in the Museum of the Asiatic Society (Extra No., *J. A. S. B.*, 1868) ... ... ... ... | 2 | 0 |
| | Catalogue of Mammals and Birds of Burmah, by E. Blyth (Extra No., *J. A. S. B.*, 1875) ... ... ... ... ... | 4 | 0 |
| | Introduction to the Maithilī Language of North Bihār, by G. A. Grierson, Part II, Chrestomathy and Vocabulary (Extra No., *J. A. S. B.*, 1882) ... ... ... ... ... | 4 | 0 |
| 5. | Anīs-ul-Musharrahīn ... ... ... ... ... | 3 | 0 |
| 6. | Catalogue of Fossil Vertebrata ... ... ... ... | 3 | 0 |
| 7. | Catalogue of the Library of the Asiatic Society, Bengal, by W. A. Bion | 3 | 8 |
| 8. | Iṣṭilāhāt-uṣ-Ṣūfīyah, edited by Dr. A. Sprenger, 8vo. ... ... | 1 | 0 |
| 9. | Ināyah, a Commentary on the Hidāyah, Vols. II and IV, @ 16/ each... | 32 | 0 |
| 10. | Jawāmlu-l-'ilm ir-riyāẓī, 168 pages with 17 plates, 4to. Part I ... | 2 | 0 |
| 11. | Khizānatu-l-'ilm ... ... ... ... ... | 4 | 0 |
| 12. | Mahābhārata, Vols. III and IV, @ 20/ each ... ... ... | 40 | 0 |
| 13. | Moore and Hewitson's Descriptions of New Indian Lepidoptera, Parts I–III, with 8 coloured Plates, 4to. @ 6/ each ... ... | 18 | 0 |
| 14. | Sharaya-ool-Islām ... ... ... ... ... | 4 | 0 |
| 15. | Tibetan Dictionary, by Csoma de Körös ... ... ... | 10 | 0 |
| 16. | Ditto Grammar " " ... ... ... | 8 | 0 |
| 17. | Kaçmiraçabdāmṛta, Parts I & II @ 1/8/ ... ... ... | 3 | 0 |

| | | |
|---|---|---|
| Notices of Sanskrit Manuscripts, Fasc. 1–26 @ 1/ each ... ... | 26 | 0 |
| Nepalese Buddhist Sanskrit Literature, by Dr. R. L. Mitra ... | 5 | 0 |

*N.B.*—All Cheques, Money Orders, &c., must be made payable to the "Treasurer, Asiatic Society," only.

1-2-99.

**Books are supplied by V.-P. P.**

BIBLIOTHECA INDICA:

A

# COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE

ASIATIC SOCIETY OF BENGAL.

NEW SERIES, NO. 1320.




# भाट्टदीपिका ।

# BHATTADIPIKA

EDITED BY

MAHAMAHOPADHYAYA PRAMATHANATH TARKABHUSHAN

PROFESSOR, SANSKRIT COLLEGE, CALCUTTA.

VOL. II.

**FASCICULUS II.**

PRINTED BY G. C. NEOGI,

AT THE NABABIBHAKAR PRESS,

AND PUBLISHED BY THE

ASIATIC SOCIETY OF BENGAL,

1, PARK STREET.

CALCUTTA:

1912.

# भाट्टदीपिका।

## नवमाध्यायः।

---

The pagination of Vol. II, fasc. II, of the Bhattadipika is incorrect. As Vol. II, fasc. I, of the work ends with page 96, the pages of Vol. II, fasc. II, should have been from page 97 onwards, instead of from page 1.

S. C. V.

जायतामित्येवमाकारकेच्छाविषयविशिष्टवृत्तित्वेन विशिष्टधर्म्मावच्छिन्नत्वात् नोक्तप्रवृत्तित्वमित्याशङ्क्यत, ततो दीक्षणीयया यक्ष्य इत्येवंविधावान्तरसंकल्पात् पूर्व्वं मन्वारम्भणीयाकरणापत्तिः, तस्य निरुक्तप्रवृत्तिविषयत्वात्, अवान्तरसंकल्पविषयप्रवृत्तेर्दीक्षणीया मे जायतामित्येवमाकारकेच्छाया दीक्षणीयात्वावच्छिन्नोद्देश्य-

# भाट्टदीपिका।

## नवमाध्यायः।

केच्छया गङ्गास्नानकरणेऽपि तदापत्तिवारणार्थं यस्मिन् पदार्थे संकल्पादिरूपे कृते दर्शपूर्णमासौ आरब्धौ इति व्यवहारः तत्पदार्थप्रवृत्तेरेव उद्देश्यतावच्छेदककोटिप्रवेशस्य आवश्यकत्वे ततएव उक्तस्थलेऽपि वारणसिद्धेः तत्तद्यागत्वादेरुद्देश्यतावच्छेदकत्ववारणार्थमेव अवच्छेदकविवक्षा अन्वयितावच्छेदकावच्छिन्नत्वव्युत्पत्त्यनुरोधेन सुतरां।

अतएव तत्पदार्थस्य उक्तरूपेणारम्भकत्वात् न द्वितीयादिप्रयोगेऽन्वारम्भणीया।

ननु एवं "साङ्गेन ज्योतिष्टोमेन यक्ष्ये" इत्येवंविधसंकल्पविषयकप्रवृत्ते दीक्षणीयात्वावच्छिन्नोद्देश्यकप्रवृत्तित्वे ततः पूर्व्वमन्वारम्भणीयापत्तिः। यदि तु उद्देश्यतायास्तत्र साङ्गज्योतिष्टोमो मे जायतामित्येवमाकारकेच्छाविषयविशिष्टवृत्तित्वेन विशिष्टधर्म्मावच्छिन्नत्वात् नोक्तप्रवृत्तित्वमित्याशङ्क्यते, ततो दीक्षणीयया यक्ष्ये इत्येवंविधावान्तरसंकल्पात् पूर्व्वं अन्वारम्भणीयाकरणापत्तिः, तस्य निरुक्तप्रवृत्तिविषयत्वात्, अवान्तरसंकल्पविषयप्रवृत्तेर्दीक्षणीया मे जायतामित्येवमाकारकेच्छाया दीक्षणीयात्वावच्छिन्नोद्देश्य-

कत्वात्। एवं राजसूयगतेष्टिपशुयागेष्वपि अन्वारम्भणीयापत्ति-रिति चेत्—

न, दीक्षणीया जायतामित्याकारेच्छानुत्पत्तावपि साङ्गज्योति-ष्टोमो जायतामित्याकारकसाङ्गत्वज्योतिष्टोमत्वप्रकारकेच्छात एव दीक्षणीयया यक्ष्ये इत्येवंविधसंकल्पविषयकप्रवृत्तेः सम्भवेन तादृश-संकल्परूपाध्यवसायस्य दीक्षणीयात्वाद्यवच्छिन्नोद्देश्यकप्रवृत्तिविष-यत्वाभावेन द्वारलोपादेव दीक्षणीयादौ राजसूयगतेष्टिपशुबन्धादौ च अन्वारम्भणीयाभावस्य दशमे वक्ष्यमाणत्वात्।

एवं सोमो मे जायतामित्याद्याकारकेच्छातएव सोमाद्य-सम्भवे वैश्वानरीष्ट्यादौ प्रवृत्तिसम्भवात् वैश्वानरेष्ट्या यक्ष्ये इति संकल्पस्याऽपि वैश्वानरेष्टित्वावच्छिन्नोद्देश्यकप्रवृत्तिविषयत्वाभावेन द्वारलोपादेव न तत्राऽप्यन्वारम्भणीया इति द्रष्टव्यं।

दर्शपूर्णमासत्वं तु साङ्गौ दर्शपूर्णमासौ जायेतामित्याकारके-च्छायां प्रकारत्वाद् भवत्युद्देश्यतावच्छेदककोटिप्रविष्टं इति विशेषः। अतः सिद्धं अन्वारम्भणीयाया उक्तविधारम्भाङ्गत्वात् विकृतावूहः। द्वितीयादिप्रयोगे चाऽनङ्गत्वमिति।

यत्तु मूले प्रथमप्रयोगारम्भे क्रियमाणाऽन्वारम्भणीया सर्व्वप्रयो-गाणामुपकरोति। न चारप्स्यमान इति अद्यतनवाचिलृट्प्रत्यय-प्रयोगात् प्रधानदिनकर्त्तव्यतावगतेः कथं सर्व्वप्रयोगोपकारकत्वमिति वाच्यं अद्यतनानद्यतनसाधारणभविष्यत्कालमात्रवाचिलृटोऽद्य-तनमात्रकालवाचित्वाभावात्। इतरथा भविष्यत्यनद्यतने लुट् इति अत्र भविष्यतीति लृट्प्रत्ययप्रयोगानुपपत्तेः। अतः प्रथम-

प्रयोगारम्भे अतैव सर्व्वेषामुपकारिका इत्युक्तम्। तत् यन्वारम्भ-णीयाजन्यस्य उपकारस्य यावज्जीवं सत्त्वे विकृतिष्वपि प्रसङ्गात् उप-कारकत्वापत्तेरसत्त्वे द्वितीयादिप्रयोगेऽप्यनुपकारकत्वानापत्तेरुपे-चितम्। ८। १ १०।

अर्थाभिधान॥ एवं तावदुपोद्घातमुखेन ऊहविषयश्चिन्तितः इदानीं साक्षादेव तद्विषयश्चिन्त्यते। तत्र फलदेवतयोश्च इत्यत्र शक्त्याऽपूर्व्वसाधनीभूतदेवताप्रकाशकमन्त्रपदानां विकृतौ तत्स्थाना-पन्नदेवताद्यन्तरे शक्त्या तत्प्रकाशनार्थं पदान्तरोह इत्युक्तं। ततश्च यन्मन्त्रपदानां न शक्त्या अपूर्व्वसाधनीभूतदेवतादिप्रकाशकत्वं, अपि तु लक्षणया, शक्यार्थस्यैव वा अदृष्टार्थमन्यस्तुत्यर्थं वा उपादानं तत्र असमवेतार्थकत्वात् विकृतावपि श्रुतपदैरेव तत्प्रयोजनोप-पत्तेर्नोहः।

समवेतार्थत्वञ्च अदृष्टाद्वारकसम्बन्धेन स्वशक्यार्थस्याऽपूर्व्वसाधनी-भूतसम्बन्धित्वं। अस्ति चेदं देवस्त्वेति मन्त्रे, अग्निनिर्व्वाप-पदयोः। अग्निनिर्व्वापयो स्तादृशयागगतद्रव्यसम्बन्धित्वात्। जय-स्तोत्रशस्त्रादिमन्त्रपदानाञ्च स्वशक्यार्थस्य अदृष्टद्वारा तादृशयाग-सम्बन्धित्वेऽपि न समवेतार्थत्वं एवं देवादिपदानामपि न समवेता-र्थत्वम्। न हि देवसवितृश्चिपूषशब्दानां प्रकृतयागीयदेवताप्रति-पादकत्वं सम्भवति उत्पत्तिशिष्टदेवतानुरोधेन मान्त्रवर्णिकदेवता-कल्पनानुपपत्तेः। न चोपांशुयाजे तत्कल्पनं तथात्वे गम्यमान-निर्व्वापैकवाक्यताभङ्गापत्तेः। न च त्वा जुष्टं निर्व्वपामि इत्येतत् पदानुक्रमेण देवस्य सवितुः प्रसवे त्वाजुष्टं निर्व्वपामि, अश्विनो-

र्बाहुभ्यां त्वा जुष्टं निर्व्वपामि, पूष्णो हस्ताभ्यां त्वा जुष्टं निर्व्वपामि, अग्नये त्वा जुष्टं निर्व्वपामि इत्येवं मन्त्रभेदाङ्गीकारेण निर्व्वपामि पदैकवाक्यतोपपत्तेः चतुर्थस्य आग्नेये उपयोगेऽपि आद्यानां त्रयाणां मन्त्राणां उपांशुयाजदेवताकल्पकत्वोपपत्तिरितिवाच्यं, अनुषङ्गे वाक्यभेदाङ्गीकारस्यैव दोषत्वात् । षष्ठ्यन्तपदानां प्रसववाहुहस्त-पदैरन्वितानां देवताप्रतिपादकत्वे प्रमाणाभावाच्च ।

अतएव एतत्कल्प्यदेवतानामन्यत्रनिवेशासम्भवेऽपि यागान्तर-कल्पकत्वमित्याशङ्काऽपि प्रत्युक्ता, तथात्वे तद्यागान्तरस्याऽऽग्नेयादि-यागाङ्गत्वापत्तेः विकृतावूहाप्रसक्तेश्च ।

एतेन या मूले सवित्रादिपदानां अग्न्यादिपरत्वं लक्षणया अङ्गी-कृत्य समवेतार्थत्वशङ्का कृता, सा आद्येन शक्यसम्बन्धेन अग्न्यादि-परत्वे तेनैव शक्यसम्बन्धेनैव देवतापरत्वस्याप्युपपत्तौ ऊहाप्रसक्ते-रुपेक्षिता । अतएव समवेतार्थत्वे शक्यार्थस्य इति विशेषणं । अस्तु वा शक्यपदं वृत्तिप्रतिपाद्यपरं तथापि समवेतार्थत्वे उक्तयुक्त्या ऊह-रूप फलाप्रसक्तेरेव इयं शङ्का उपेक्षिता ।

तस्मात् कथमपि समवेतार्थत्वासम्भवात् देवस्य त्वादिपदानां यः शक्योऽर्थस्तद्विशिष्टप्रकाशनमेव देवस्य त्वेत्यादिसकलमन्त्रप्रयोजनं । तत्र येषां पदार्थानां दृष्टप्रयोजनसम्भव स्तत्प्रकाशनस्य दृष्टमेव प्रयोजनं, येषां तु तदसम्भवः तत्प्रकाशनस्य अदृष्टमेव प्रयोजनं कल्प्यं । अतएव तादृशपदानां निर्वापोपरि वैशिष्ट्यमपि आहार्य्य सम्बन्धेन एव इति ध्येयम् ।

तदिह निर्व्वापपदस्य तावद् दृष्टमेव पृथक्करणं प्रयोजनं ।

मन्वये त्वापदार्थस्य च तदुपयोगितया, स्वातन्त्र्येण च। जुष्टपदस्य तु वच्यते। तदन्येषान्तु भ्रदृष्टार्थत्वमिति।

केचित्तु देवस्यत्वादिपदं निर्वापस्तुतिलक्षणया प्रतिपाद्यते। सा च भ्रनुष्ठानकाले निर्वापप्ररोचितुर्दृष्टार्थैव। तथा चाऽस्तु सर्व्वथा देवस्यत्वादिपदानि भ्रसमवेतार्थानि नोहितव्यानि। यत्तु भाष्यकारेण यद्गोश्वा भश्विशब्द भ्राधाने भ्रश्वदानकरणात् दम्पतिपरः पूषशब्दस्य पोषकत्वात् यजमानपरः। भ्रध्वर्य्युबाहुहस्तयोश्च तदीयत्वं परिक्रीतत्वात्, एवं सविताऽपि लक्षणया यजमानः तस्य प्रसवेऽनुज्ञायामित्यर्थाङ्गीकारेण निर्व्वापविशेषणत्वमुपपादितं। तद्वेदे भ्रारोपकपुरुषाभावात् भ्रन्यत्र भ्राहार्य्यारोपाभावस्येव इहापि भ्रारोपाभावमभिप्रेत्य। भ्रन्यदातु भ्रध्वर्य्योः स्वात्मनिष्ठेन भ्राहार्य्यारोपेण वैशिष्ट्यं सम्पाद्य स्वकर्त्तृकं निर्व्वापं प्रकाशयितुं लौकिकवाक्यप्रयोगवत् वैदिकवाक्यप्रयोगेऽपि बाधकाभाव इत्यालोच्यते, तदा भ्रप्रयुक्तलक्षणायां प्रमाणाभावात् भ्रध्वर्य्युब्रह्मयजमानान्यतमग्रहणे नियामकाभावाच्च पूर्व्वोक्तपक्षाश्रयणमेव युक्तं।

किञ्चैवं सर्वे देवसवित्रश्विपूषशब्देषु बहुवचनोहः प्रसज्यते। न च यज्ञपतिवद्विवदत्र पदार्थत्वमिति भाष्यकारसमाधानं युक्तं—भ्रश्विपूषपदयोः * तथा सम्भवेऽपि यजमानानुज्ञायाः परकीयद्रव्यविषये व्यलीकादिपरिहारार्थत्वमदृष्टार्थत्वादुदीचीनमस्यपदो निधत्तावित्यादाविव देवसवितृपदयोरूहस्य भ्रनिवार्य्यत्वात्।

नचैवं देवस्य सवितुरुदयरूपे प्रसवे इत्यर्थाङ्गीकारेण तस्य सम-

---

* भ्रश्विपूषणोरिति पाठान्तरं।

वेतार्थत्वात्। "महारात्रे हवींषि निर्वपेत्" इत्यादिविकृतौ अप्रसवे इत्यूहापत्तिः। अमावास्यायां च प्रागुदयान्निर्व्वापलोपापत्तिः— इति वाच्यं प्रसवे जाते जनिष्यमाणे वा इत्यर्थाङ्गीकारेण बाधकाभावात्। सूर्य्योदयकालीनत्वप्रकाशनस्य दृष्टार्थत्वाभावाच्च। अतो न देवस्य त्वेत्यादिपदेषूह इति सिद्धम् ॥ ८ ॥ १ ॥ ११ ॥

॥ जुष्टशब्दः ॥ तस्मिन्नेव मन्त्रे "अग्नये जुष्टं निर्व्वपामी"त्यत्र अग्निशब्दः समवेतार्थको न वा इति चिन्तायां यद्यपि अग्निर्यागे समवेतस्तथापि सम्प्रदानत्वेन श्रुतस्य निर्व्वापे यागाद्यतिरिक्तेऽनन्वयात् तादर्थ्ये चतुर्थीमङ्गीकृत्य जुष्टपदार्थेऽन्वयो वाच्यः। तत्र च जुषीप्रीतिसेवनयोरिति स्मृत्या जुष्टशब्दस्य सेवनार्थकत्वप्रतीतेरग्निना सेवितं यथा भवति तथा निर्व्वपामीत्यर्थाङ्गीकारेण जुष्टशब्दस्य क्रियाविशेषणत्वमङ्गीकृत्य निर्व्वापफलप्रकाशनेन इतरदेवत्यहविर्विवेकसम्पत्त्यर्थतया निर्व्वापे देवतासंयोगस्य समवेतार्थत्वमितरथा कस्यै देवतायै निरुप्तमिति निर्णयानापत्तेः।

वस्तुतस्तु, तादर्थ्ये चतुर्थ्यपि इयं प्रधानान्वयस्याऽभ्यर्हितत्वात् क्रियान्वयिन्येव। अग्न्यर्थत्वञ्च निर्व्वापस्य विध्यनुरोधात् तदुद्देश्यकत्यागसाधनीभूतद्रव्यसंस्कारकत्वसम्बन्धेन इति न देवतार्थत्वापत्तिः। जुष्टपदं तु पूर्व्ववदेव क्रियाविशेषणं। भविष्यदर्थे वा क्तप्रत्ययो लाक्षणिकः। अग्नेस्तु, तेन पार्ष्णिक एवान्वयः। देवतासम्बन्धकीर्त्तनप्रयोजनं तु निर्व्वापे पूर्व्ववदेव इति समवेतार्थत्वं।

अस्तु, वा इयं सम्प्रदानचतुर्थी अपि देवतात्वरूपसम्प्रदानत्वैकदेशपरा। तथापि देवताया ग्रहण इव निर्व्वापेऽप्यन्वयो निरूप-

प्रयोजनार्थं न विरुध्यते। जुष्टपदं पूर्व्ववत्। सर्व्वथा अग्निपदे समवेतार्थत्वादूहः।

। एवं वा। दर्शपूर्णमासयो "धान्यमसि धिनुहि देवान्" इति मन्त्रः श्रुतः। "स च धान्यमसि इति दृषदि तण्डुलानधिवपति" इति वचनेन तण्डुलाधिवापे विनियुक्तः, तत्र धान्यशब्दः सतुषद्रव्यवचनस्तण्डुलावस्थायां प्रयुज्यमानः धान्यत्वारोपेण स्तुत्यर्थः सविशादिपदवदेव असमवेतार्थ इति मांसेऽपि तदारोपेण प्रयोक्तव्य इति प्राप्ते।

शालयो भुज्यन्ते इति विकार्य्येऽपि प्रकृतिवाचकपदप्रयोगात् प्रयुक्तलक्षणोपलक्षणोपपत्तेः—असिपदाभिमततण्डुलरूपकर्त्तृसामानाधिकरण्याच्च लक्षणया धान्यशब्दस्तण्डुलपरः सन् समवेतार्थक एव।

नन्वेवं समवेतार्थकत्वेऽपि मांसेऽपि धान्यशब्दप्रयोगापत्तेः नोहप्रसक्तिः, धान्यपदस्यैव प्रकृतौ तण्डुलस्मारकत्वात् विकृतौ मांसस्मारकस्य प्रोक्षणादिवत् कथञ्चिदूहलक्षणाक्रान्तत्वेऽपि वा धान्यपदबाधेन मांसपदप्रक्षेपरूपसिद्धान्तानापत्तिः। यथैव हि प्रकृतौ अग्निपदेन शक्त्या अपूर्व्वसाधनीभूतं प्रकाशयेदिति लिङ्गकल्पितश्रुत्या मन्त्रविनियोगात् विकृतौ अग्निदेवत्यायां शक्त्या अग्निपदेनैव उक्तदेवताप्रकाशनोपपत्तेः न पदान्तरप्रक्षेपः, सत्यां गतौ प्राकृतवृत्तितद्वत्पदयोर्बाधे प्रमाणाभावात्। अपि तु अन्यदेवतायामेव सः। तत्र शक्त्या अग्निपदेन तत्प्रकाशनानुपपत्तेः। प्रकृतौ वृत्तिविवक्षासत्त्वात् विकृतौ च वृत्तेर्व्यापारत्वेन तन्मुखेनैव अग्निरूपपदार्थप्राप्तेः लक्षणयापि नाऽग्निपदेन तत्प्रकाशनम्। अतस्तत्र प्राकृतशक्तिनिर्व्वाहार्थं सूर्य्यादिपदान्तरप्रक्षेपएव शरणं। न

त्वग्निदैवत्यायां विकृतौ । तथैव धान्यपदेन लक्षणया प्रदेयप्रकृतिभूतं प्रकाशयेदिति गौणसामर्थ्यप्रकल्पित श्रुत्या मन्त्रविनियोगाद्विकृतावपि मांसे उपकारपृष्टभावेन धान्यपदस्यातिदेशात् तदबाधाय धान्यपदेनैव मांसप्रकाशनोपपत्तेः न पदान्तरप्रक्षेप इति चेत् ।

सत्यं । प्राकृतप्रकाशरूपोपकारपृष्टभावेन प्राकृतवृत्तिरूपव्यापारातिदेशः तत्पृष्टभावेन च अग्न्यादिपदरूपपदार्थातिदेशः । इतरथा वृत्त्यनतिदेशे प्रकाशनपृष्टभावेनातिदिष्टपदस्य विकृतौ लक्षणयापि प्रकाशकत्वोपपत्तेः पदान्तरप्रक्षेपानापत्तिप्रसङ्गात् । तथापि प्राकृतपदनिष्ठप्राकृतवृत्तिरेव विकृतावतिदिश्यते । न तु वृत्तिमात्रं प्रमाणाभावात् ।

अतएव सौर्य्यप्राकृतपदस्येव प्राकृतवृत्तेरपि बाधसत्त्वेऽपि सूर्य्यप्रकाशनकार्य्यानुरोधेनैव मन्त्रपदान्तरानुरोधात् सूर्य्यपदप्रक्षेपः । अतश्च धान्यप्रकृतिकत्वरूपशक्यसम्बन्धरूपायाः प्राकृतलक्षणावृत्तेर्मांसे बाधे सम्बन्धान्तररूपलक्षणावृत्तिकल्पने प्रमाणाभावाद् धान्यपदस्य बाधावश्यम्भावे मांसप्रकाशनरूपकार्य्यानुरोधेन मन्त्रपदान्तरानुरोधादेव मांसपदप्रक्षेपः ।

अतएव न प्रकृतिवाचकमृगपदप्रक्षेपोऽपि । शक्तपदप्रक्षेपसम्भवे अप्राकृतलक्षणया पदान्तरप्रक्षेपस्याऽन्याय्यत्वात् ।

अतः “शाक्यानां अयनेतरसमयाः सवनीयाः पुरोडाशा भवन्ति” इत्यत्र मांसे अधिवापे क्रियमाणे “मांसमसि” इत्यूहितव्यं । इदं च क्त्वाचिन्तया । तृतीये सवनीयोद्देशेन हविष्ट्वेनैव इतरसविधानस्यापि स्थापितत्वात् ।

सत्यपि वा देयप्रकृतित्वे अर्थलोपेन तत्राऽधिवापस्य चरौ इव बाधितत्वाच्च। विस्तरेण चैतत् न्यायसुधाकरमतनिरासपूर्व्वक-मुपपादितं "द्वितीये धर्म्ममात्रे तु कर्म्म स्या"दित्यत्र कौस्तुभे।९॥१॥१२॥

चोदिते तु ॥ दर्शपूर्णमासयोरिड़ानिगदे श्रुतं "दैव्या अध्वर्य्यव उपहूता उपहूता मनुष्याः य इमं यज्ञमवान् ये च यज्ञपतिं वर्द्धानुप-भूते द्यावापृथिवी"त्यादि। तत्र मन्त्रे यज्ञपतिशब्दो बहुवचनान्त-त्वेनोहितव्यो न वा इति चिन्तायां। न तावदसमेतार्थत्वादनूहः। यज्ञपतेस्तद्दृष्टेश्च मनुष्यरूपाध्वर्य्युपदवाच्यऋत्विक्कर्त्तृकायाः कर्म्मणि समवेतत्वात्। नचाऽस्यैलोपाह्वानवाचकपदैकवाक्यतया तदर्थ-त्वावगमात् यज्ञपतिद्रव्यप्रकाशनार्थत्वाभावेन सत्यपि समवेतार्थत्वे परार्थत्वादनूहः। लिङ्गेन मन्त्रगतवाक्यस्य "स्योन ते" इतिवदबाधेन यज्ञपतिद्रव्यार्थत्वोपपत्तेः।

न च "समो ह्येवविधानि उपाचरतो"ति विधाय * "अथ प्रपद्यते इला उपहूता उपहूता इला उपाऽस्मा इलाह्वयतामिलोपहूता इत्याह" इति ब्राह्मणवाक्येन प्रतीकग्रहणेन कृत्स्नस्य निगदस्य इड़ोपाह्वाने विनियोगात् तत्सहकृतेन मन्त्रगतवाक्येन मन्त्रलिङ्गस्यैव वा बाध इति वाच्यं। ब्राह्मणवाक्येन यावदुपात्तस्यैव विनियोगोपपत्तौ प्रतीकग्रहणे प्रमाणाभावात्।

अस्तु वा विनियोगान्तरकल्पनागौरवभिया प्रत्यक्षवाक्येनैव प्रतीक-ग्रहणेन समस्तविनियोगकल्पनं। अतएव "स्योनं ते" इत्यादौ

* भाष्ये तु "सयो ह्येवं विद्वान् इड़या चरती"त्यभिधाय—"अथ प्रतिपद्यते इड़ोपहूता उपहूतेड़ोपास्मा इड़ाह्वयामि इड़ोपहूता इत्याह" इत्येवं पाठो दृश्यते।

प्रत्यक्षविनियोजकवाक्याभावात् अपेक्षितविनियोगद्वयकल्पनेऽपि न क्षतिः ।

किञ्च "ये च यज्ञपतिं वर्द्धान्" इत्यादौ यच्छब्दबलादेव यज्ञपति-द्विकर्तृ णां मनुष्यरूप-ऋत्विजां उपस्थानकर्म्मत्वं प्रतीयते । अतो यच्छब्दसामर्थ्यात्मकलिङ्गादेवास्येड़ोपस्थानशेषता । अतएव "स्योनन्ते" इत्यत्राऽपि यदि पूर्व्वार्द्धे यच्छब्दः स्यात् तदास्या देव तत्रैकवाक्यता, नत्वेतदस्तीत्यतो मन्त्रभेदोऽङ्गीकृतः । प्रकृते तु यच्छब्दसद्भावादि-ड़ोपस्थानशेषतैव । तथापि प्रथनशेषभूतस्यापि "उरु ते यज्ञपतिः प्रथता"मिति मन्त्रस्य आनुषङ्गिकयज्ञपतिप्रोत्साहनार्थत्ववदस्याऽपि तथात्वोपपत्तेः सत्रे तद्वदेव ऊहोपपत्तिः । न हि प्रोत्साहनार्थेषु "आयुर्दाऽग्नेऽस्य आयुर्मे देहो"त्यादिषु सत्रे नोहः आवृत्तिर्वा । अतश्च यद्यपि नेदं प्रथनफलं । तथापि आनुषङ्गिकप्रोत्साहनमात्रेणोहव-दिहाऽपीड़ोपस्थानशेषभूतस्याऽप्यस्य मन्त्रस्य आनुषङ्गिकयज्ञपतिप्रोत्-साहनार्थत्वादूहोपपत्तिरविकलैव । वस्तुतस्तु प्रहरणाङ्गभूतस्याऽपि प्रस्तरप्रतिपादकपदैकवाक्यतापन्नस्याऽपि "आयुराशास्ते" इत्यादेः प्रहरणफलप्रतिपादकत्वाद्यथा सत्रे ऊहः प्रत्युदाहरणसूत्रे वक्ष्यते, तथेहाऽपि इड़ोपस्थानाङ्गस्याऽपि इड़ोपस्थानपदैकवाक्यतापन्नस्याऽपि इड़ोपस्थानफलप्रतिपादकत्वाद् युक्त एव सत्रे ऊहः । न हि तृतीया-निर्दिष्टएव मान्त्रवर्णिकफलं नाऽन्यत्र इति नियमे प्रमाणमस्ति, स्थानादिविनियुक्तस्याऽपि मन्त्रस्य देवताकल्पकत्ववत् फलकल्पकत्वेऽपि बाधकाभावात् । न च अपेक्षितकल्पकत्वेऽपि यत्र इड़ोपस्थानादे रिड़ासंस्कारार्थत्वेन कृतार्थता, तत्र विना तृतीयां न फलकल्पकत्व-

मिति वाच्यं, तृतीयास्थलेऽपि प्रहरणप्रतिपाद्यप्रस्तरप्रतिपादकतया सूक्तवाकप्रातिपदिकबलेन मान्त्रवर्णिकदेवतामात्रकल्पनेन वा तृतीयावगतकरणत्वनिर्व्वाहोपपत्तौ "इदं द्यावा" इत्यादि * पदानामिव आयुरादिपदानामपि स्तावकत्वेनोपपत्तेः फलकल्पकत्वे प्रमाणाभावात् "ममाग्ने वर्च्च इति पूर्व्वमग्निं परिस्तृणाती"ति इतिकरणविनियुक्तस्थले फलकल्पकत्ववदिहोपस्थानेऽपि इतिकरणविनियुक्तत्वात् फलकल्पकत्वोपपत्तेश्च। नचैवमप्येवमादिस्थले सर्व्वत्रैव यज्ञपतेरुद्देश्यत्वात् तद्विशेषणस्य एकत्वादेर्वस्तुतोऽविवक्षितत्वेन प्रकाशनानर्हत्वात् सर्व्वयज्ञपतीनाञ्च "ग्रहं सम्मार्ष्टि" इतिवत् प्रातिपदिकेनैवोपपत्तेः प्रकृतौ साधुत्वार्थस्यैकवचनस्य कथं विकृतावूह इति वाच्यं, प्रकृतावविहितस्याप्यधिकार्य्यैकत्वस्योपकारत्वमात्रेण तावत् सद्भावात् तावतैकवचनेन प्रकाशनोपपत्तौ साधुत्वार्थकत्वकल्पने प्रमाणाभावात्, अतश्च विकृतौ तद्गतबहुत्वप्रकाशनार्थं सिध्यत्येवोह इति प्राप्ते—

न तावद् यज्ञपतिविषयिकपाठ्ठानफलं इड़ाभक्षणाङ्गत्वेन प्रकृतार्थस्य स्वरसतः फलानपेक्षत्वात्। एवं सत्यपि यदि तृतीयया इतिकरणेन वा क्रियां प्रति विनियोगः स्यात् ततः क्रियाकरणत्वं मन्त्रस्य सकलस्य प्रकाशनद्वारेणैव इति प्रथमतस्तावत् क्रियाप्रकाशकत्वमेव। तदसम्भवे तत्सम्बन्धिप्रस्तरादिप्रकाशकत्वं तस्याऽप्यसम्भवे मन्त्रप्रकाश्यस्याऽनपेक्षितस्याऽपि क्रियासम्बन्धकल्पनं इतरथा सफलस्य मन्त्रस्य श्रुतकरणत्वानिर्व्वाहात् तत्र च विनिगमनाविरहाद्यथैव सूक्तवाकप्रतिपाद्यदेवतायाः कल्पनं तथा आयुरादेरपि फलस्य। यत्र तु

* क्वचित् इति पदानामिति पाठः।

सर्व्वथा असम्भवस्तत्र "इदं द्यावा" इत्यादौ अगत्या स्तावकत्वमिष्टमेव। अनयैव च दिशा "ममाग्ने" इत्यादौ वर्च्चःप्रभृतीनामपि फलत्वं बोध्यं। तत्राऽप्रीतिकरणविनियुक्तत्वस्य कौस्तुभे स्थापितत्वात्। अतएव कौस्तुभोक्तरीत्यैव यत्र प्रथनमन्त्रादौ न इतिकरणेन विनियोगः अपि तु लिङ्गादेव सः। तत्र "प्रथस्वे"तिभागस्य प्रथनप्रकाशकत्वेन प्रयोजनवत्त्वलाभेऽवशिष्टभागस्य प्रोत्साहनस्तावकत्वादिनैव तदेकवाक्यत्वोपपत्तौ न प्रथनफलकल्पकत्वं लिङ्गेन एकदेशेऽपि प्रयोजनलाभे सकलस्य प्रयोजनवत्त्वोपपत्तेरिति मीमांसकमर्य्यादा। तत्राऽपि तु लिङ्गवशात् फलकल्पकत्वाङ्गीकारे नाऽतीव काचिदनुपपत्तिः। परन्तु तत्र क्रियाजन्यत्वं फलस्य लिङ्गवशात् प्रतीयते यथा प्रथनमन्त्रादौ, प्रकृते तु प्रथनस्य तावन्नेतिकरणेन क्रियायां विनियोगः। "अथ प्रपद्यते इत्याहे"त्यादिना मन्त्रोच्चारणस्यैव इडाभक्षणाङ्गत्वेन विधिः। सर्व्वथा न उपस्थानं नाम किञ्चिदस्ति क्रियाङ्गं यत्फलं यजमानपतिवृद्धिर्भवेत् द्यावापृथिव्याद्युपस्थानप्रकाशनस्यैवोक्तविधमनुष्योपस्थानप्रकाशनस्यैव अदृष्टार्थत्वात्। वस्तुतस्तु सत्यपुरुपस्थानस्य भक्षणाङ्गत्वे न तत्फलत्वं यजमानपतिवृद्धेरत्र मन्त्रे प्रतीयते। येन मान्त्रवर्णिकफलकल्पना शङ्क्येत। न हि इडाभक्षणार्थं यजमानपतिवृद्धिकर्तृ मनुष्योपस्थानमात्रेण यजमानपतिवृद्धिर्जायते इतिशब्दस्वारस्यात् प्रमाणमन्तरेण प्रतीयते ये यजमानपतिवृद्धिं कर्त्तुं समर्थाः स्युः उपस्थिता इति हि तदर्थः। न च यद्यत्कर्त्तुं समर्थं तदाह्वाने तज्जायत इत्यत्र प्रमाणमस्ति अतो न तावदस्य फलप्रतिपादकत्वं अतएव न प्रोत्साहनार्थत्वमपि वृद्धिगतस्वनिष्ठत्वज्ञानमन्तरेण प्रोत्साहनानुपपत्तेः। अतोऽत्र यजमानपतिवृद्धेरुपस्थान-

विशेषणत्वेनोपात्तायाः परार्थत्वात् अदृष्टार्थप्रकाशनविषयत्वेन अदृष्टार्थत्वाच्च सर्व्वे प्रकृताप्रकृतसाधारणैकयज्ञपतिप्रकाशनमात्रेण च तदृष्टोपपत्तेरनूहः। यत्राऽपि यजमानः न स्वरूपेणोपयुज्यते परन्तु गुणभूतो यथौदुम्बरीसम्मानादिषु। तत्राऽपि आग्नेयीन्यायात् प्रकृतग्रहणेऽपि एकस्यैव ग्रहणं न सर्व्वेषां यजमानसंस्कारकत्वाभावात्। तत्र का कथा अदृष्टार्थप्रकाशनविषयभूते यज्ञपताविति। अतएव यत्र यजमानस्य मान्त्रवर्णिकायुरादिफलभोक्तृत्वेन प्राधान्यं यथा सूक्तवाकादौ "आशास्ते यं यजमान" इत्यादौ, यत्र वा प्रोत्साहनार्थत्वेन यजमाननिष्ठश्रद्धाजननात् तस्य प्राधान्यं यथा "आयुर्दा अग्ने उरु ते यज्ञपतिः प्रथता"मित्यादौ, तत्र उभयत्रापि सर्व्वे ऊहः। तदिदमुक्तं "विकारस्तत्प्रधाने स्या"दिति प्रत्युदाहरणसूत्रेण। ६।१।१३।

असंयोगात्। ज्योतिष्टोमेऽस्ति सुब्रह्मण्यानिगदः "इन्द्र आगच्छ हरिव आगच्छ" इत्यादिरिन्द्रप्रकाशकः। इन्द्रदेवत्यस्य यागाभ्यासो दशभिस्समसः सह शुक्रामन्थिग्रहाभ्यां क्रियमाणः सवनमुखीयसंज्ञकः। तन्मात्राङ्गमेव तु सुब्रह्मण्यानिगदो, लिङ्गात्। न तु अन्यदेवताभ्यासाङ्गं "व्रीहीणां मेध" इतिवत्। अग्निष्टुद्यागे च "आग्नेया ग्रहा भवन्ति" इति वचनात् प्राकृतग्रहीयदेवताबाधेन अग्निदेवताविधानात् सवनमुखीयेऽपि अग्निर्देवता। ततश्च तदङ्गभूतः सुब्रह्मण्या यामिन्द्रपदस्थानेऽग्निपदप्रक्षेपेण ऊह्यत एव। न चैवं न्यायादेव ऊहसिद्धौ "आग्नेयी सुब्रह्मण्या" इति वचनवैयर्थ्यापत्तिः। प्रकृतौ सवनमुखीयवत् सवनीयहविषामपि इन्द्रदेवत्यत्वात् वेदिवर्हिर्न्यायेन सुब्रह्मण्यानिगदस्य उभयार्थत्वप्रसक्तौ विकृतावपि तदर्थत्वं भेदेन

अभेदेन वाऽनूहितसुब्रह्मण्यानिगदपाठप्रसक्तेराग्नेय्येव सुब्रह्मण्या कार्य्या इत्येतत्फलकत्वाङ्गीकारेण वचनसार्थक्यात्। अतएवैतद्वचनरूपतात्पर्य्यग्राहकानुरोधेन प्रकृतावपि न सवनीयहविरर्थत्वं। अपि तु सवनमुखीयशुक्रामन्थिप्रचारार्थत्वमेव सुब्रह्मण्यानिगदस्येत्यपि परं ध्येयं।

केचित् तु सवनमुखीये चमसैरेव होम इन्द्रदेवताकः न तत्राग्निष्टुत्यग्निदेवताकत्वं ग्रहेष्वेव तद्विधानात् अतश्च न्यायेन अप्राप्त एव सुब्रह्मण्योहः। वचनेन तु अग्निदेवत्यग्रहयागाभ्यासाङ्गतया आग्नेयी सुब्रह्मण्या सवनमुखीयादाच्छिद्य विधीयत इत्याहुः। तन्न। सवनमुखीयहोमस्याऽपि शुक्रामन्थिग्रहकरणकत्वेन सकलयाज्ञिकप्रसिद्धत्वात्। वचनेन अग्निदेवत्यग्रहयागाभ्यासे औपदेशिकसुब्रह्मण्याविधानेऽपि सवनमुखीये आतिदेशिकेन्द्रसुब्रह्मण्याबाधे प्रमाणाभावाच्च सुब्रह्मण्यायास्तत्र औपदेशिकत्वे ऊहानूहविचारस्य असङ्गतत्वापत्तेश्च अतोऽस्मदुक्तप्रकार एव श्रेयान्। इदं तु चिन्त्यते। किमिन्द्रपद इव हरिवदादिपदेऽप्यूहो भवति उत नेति। तत्र देवताविग्रहादिवदेव मन्त्रार्थवादेतिहासपुराणप्रामाण्यात् हरिवदादिगुणानामपि इन्द्रे समवेतत्वादग्निष्टुति अग्निगुणप्रकाशनार्थं रोहितादिपदानामूह इति प्राप्ते—

देवताधिकरणन्यायेनैव मन्त्रादीनां तत्परत्वे प्रमाणाभावात् हरिवदादिपदानां असमवेतार्थकत्वेन आहार्य्यारोपेणेन्द्रस्तुतिवदग्निस्तुतेरप्युपपत्तेर्नोहः। तदेतद्देवताधिकरणस्य प्रयोजनमावश्यकनार्थं प्रयोजनमपि चेदमूहस्मृत्यभावं ज्ञात्वाचिन्तया। यदा तु छन्दोग-

सूत्रे "अग्निष्टुति अग्न आगच्छ रोहिताश्वो बृहद्भानो धूमकेतो जात-वेदोविचर्षण" इति ऊहितस्यैव पाठः समाम्नातस्तदास्या: स्मृतेर्न्यायो-पन्यासपूर्व्वकत्वाभावेन अष्टकादिस्मृतिवत् श्रुतिमूलकत्वावश्यम्भा-वात् तया चैतदधिकरणन्यायस्याभासीकरणादूहितपाठ एव युक्तः। तदा च मन्त्रान्तरस्य देवताविशेषणविषयमिदमधिकरणं द्रष्टव्यम्। अतएव यत्रैव न्यायोपन्यासपूर्व्विका स्मृतिस्तत्रैव स्मृतिमूलत्वे न्यायो-पन्यासवैयर्थ्यापत्ते "र्मीमांसास्थसन्न्यायविरोधे आभासत्वं स्मृते"रित्युक्तं कल्पसूत्राधिकरणे। देवताधिकरणगतार्थत्वादिनैव वर्णकान्तरं—

साद्यस्के "त्रिवत्सः साण्डः सोमक्रयण" इति सोमक्रयसाधनतया विहिते त्रिवत्सेऽतिदेशप्राप्ते "इयं गौस्तया क्रोणामि तस्यं शृतं तस्यै शरस्तस्यं दधि तस्यै मस्तु तस्या आतञ्चनं तस्यै नवनीतं तस्यै घृतं तस्या आमिक्षा तस्यै वाजिनम्" इत्येकहायनीमन्त्रे स्त्रीलिङ्गांशे पुंलिङ्गोहस्त्वविवाद एव, शृतादिपदेष्वपि किं तस्य शुक्रं तस्य बलं तस्य युद्धं तस्य जय स्तस्य हम्भारवस्तस्य पलायनं तस्य लीला तस्य आरोहणं इत्येवमूहितव्योर्नेति सन्देहे शृत।मत्यादौ च्छिनत्यादिव-दध्याहार्य्ये क्रियापदे यद्यपि अस्तीति नाऽध्याहर्त्तुं शक्यते, एक-हायन्यवस्थायां शृतादेरभावात्तथापि भविष्यतीत्यध्याहर्त्तव्यं। ततश्च भविष्यत्तायाः समवेतत्वाद्विक्रेत्रानमनार्थत्वेन च दृष्टार्थत्वात्त्रिवत्से-ऽपि विक्रेत्रानतिहेतुत्रिवत्सगुणप्रकाशनार्थं कर्त्तव्य एवोह इति प्राप्ते—

भविष्यत्ताया अपि मरणवन्ध्यात्वादिना नियतत्वाभावात् सम्भवीत्येव पदं प्रकृतावध्याहार्य्यं—गोः स्तावकं विक्रेत्रानमनार्थं

वेत्यन्यदेतत्। उभयथापि चिवत्से अविकृतस्यैव प्रयोगादनूहः। ग्रक्ष्यते हि साक्षाद्या गौ र्जनिष्यते तस्या जायमानं घृतादि साक्षीय-मिति व्यपदेष्टुं। तस्मात् सम्भावनाया विकृतावपि सम्भवादनूह एव। ८। १। १४।

लिङ्गविशेष—। ज्योतिष्टोमे क्रतुपशवः समाम्नाताः। "आग्नेय-मजमग्निष्टोमे आलभेत ऐन्द्राग्नमुक्थे द्वितीयमैन्द्रं वृष्णिं षोड़शिनं तृतीयं सारस्वतीं मेषीमतिरात्रे चतुर्थीमिति" अत्र तत्तत्संस्थाकत्व-निमित्ते प्रकरणात् क्रतुपशुसमाख्याबलात् ज्योतिष्टमाङ्गत्वेन पशुयागा विधीयन्ते न तु तत्तत्संस्थोद्देशेनैव तेषाञ्च अग्नीषोमीया-द्धर्मातिदेशो न तु तेन समानविधानत्वमित्युक्तं तृतीये, अग्नीषोमी-याङ्गञ्च "अधिगुप्रैषः प्रास्मा अग्निं भरत" इत्यादिः। स क्रतुपशु-ष्वप्यतिदेशेन प्राप्तोऽतिरात्रे तन्त्रेण चतुर्णामर्थे पठनीयः, "प्रैभ्योऽस्मा अग्निं भरता"दित्यूहितव्य एव मेष्यामपीत्यविवादं। यदा तु पशूनां समानविधानत्वं तदा मेष्यर्थत्वमस्याऽस्ति नवेति चिन्त्यते। तत्र पुंलिङ्गस्य मेष्यसमवेतत्वेऽपि अस्मा इति प्रातिपदिकार्थचतुर्थ्यर्थयोः प्रधानभूतयोर्मेष्याः समवेतत्वात् पुंलिङ्गस्य च गुणभूतस्य पाशाधि-करणन्यायेन निर्देशमात्रार्थत्वात् समस्तस्य मन्त्रस्य प्रकरणान्मेष्य-र्थत्वमप्यविरुद्धं, न च पुंलिङ्गस्य क्वचिद्विभक्त्यर्थत्वेऽपि क्वचित् प्राति-पदिकाद्यर्थत्वस्यापि सत्त्वात् कथं प्रातिपदिकार्थं प्रति लिङ्गस्य गुणत्व-मिति वाच्यं विभक्त्यर्थत्वेऽपि संख्यायामिवानुभवस्य सत्त्वसमाख्या। वा लिङ्गेऽपि गुणत्वनियामकत्वात् न हि संख्यायामपि विभक्त्यर्थत्वं गुणत्वनियामकं विरुद्धत्वात्, अतो लिङ्गस्य यत्किञ्चिदर्थत्वेऽप्यनुभव-

बलेन प्रातिपदिकार्थं प्रति कारकं प्रति च गुणत्वात् पाशाधिकरण-प्रवृत्त्यनुपपत्तेः मन्त्रस्य मेधामपि प्रवृत्तिः । न च पुंलिङ्गस्य पुंपशुषु प्रकृतेऽप्यर्थवत्त्वेन तदनुरोधेन "व्रीहीणां मेध" इत्यत्र गुणभूतव्रीहि-पदानुरोधेनैव इतरमन्त्रस्य सङ्कोचोपपत्तिः "पत्नीं संनह्य" इत्यस्य एकवचनानुरोधेन एकपत्नीकप्रयोगमात्रविषयत्वाकल्पनवदस्याऽपि पुंपशुमात्रविषयत्वाकल्पनात् । अतएव प्रकृतमन्त्रेऽप्येकवचनानुरोधेन न देवमात्रविषयत्वं । गुणानुरोधेन प्रधानसङ्कोचस्य अन्याय्यत्वात् । इतरथा मेषविषयत्ववत् सर्व्वपुंपशुविषयत्वस्याऽप्यनापत्तेः । अतएव एवंविधेषु सर्व्वेषु वचनस्य वा लिङ्गस्य वा साधुत्वमात्रार्थं प्रयोगः । न च "जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्या"मिति स्मृत्या जाति-मात्राभिधाने विवक्षिते तस्या एकत्वेऽपि बहुवचनं विकल्पेन भवतीत्यर्थिकया बहुष्वप्यर्थेषु जात्यभिप्रायेणैकवचनस्याऽनुशासितत्वा-देकवचनप्रयोगसम्भवेऽपि लिङ्गस्य कथं विलिङ्गे साधुत्वार्थं प्रयोग इति वाच्यं लिङ्गस्याऽपि "सुप्तिङुपग्रहलिङ्गनराणा"मित्यनेन च्छन्द-स्यनुशासितत्वात् "प्रास्मा" इति सर्व्वनाम्न उपस्थितव्यक्तिवाचित्वेन जात्यभिप्रायत्वानुपपत्तेश्च । अस्य सूत्रस्य भाष्यकारेण प्रत्याख्यातत्वाच्च । अतो वचनवल्लिङ्गस्याऽपि प्रातिपदिकार्थगतलिङ्गमात्रोपलक्षणतया साधुत्वार्थमुपादानात्तदनुरोधेन प्रधानभूतसर्व्वमन्त्रसङ्कोचानुपपत्ते-र्युक्तोमेधामप्यध्रिगुः । "व्रीहीणां मेध" इत्यत्र तु यवप्रयोगे साधुत्वार्थे प्रयोग इत्यस्य वक्तुमशक्यत्वात् पदद्वयरहितमन्त्रप्रयोगस्य च यावन्ति वाक्ये पदानि श्रुतानि तावतां संभूयार्थप्रतीतिकारित्वनियमेन वक्तु-मशक्यत्वाद्युक्त एव व्रीहिप्रयोगमात्रे सङ्कोचः । एतादृशनियमा-

नक्षौकारे च दृष्ट एव पदद्वयरहितमन्त्रप्रयोगः केषाञ्चिद्याज्ञिकानां। वस्तुतस्तु पुंलिङ्गमपि मेष्यां प्रातिपदिकस्य चोदनागतपशुशब्दाभिप्रायत्वात् पशुशब्दस्य नित्यं पुंलिङ्गत्वात् "प्राश्मि पशव" इत्युपपत्तेः समवेतमेवेति प्राप्ते—

मन्त्रे पशुशब्दश्रवणात् "प्राश्मा" इतिशब्देन प्रयोगकाले यदपरोक्षतया स्थितं तत् परामष्टव्यं। तदा च व्यक्तिरेव अभिधीयते न स्त्रीद्रव्यं मेषी। अतो न तावत् समवेतमेव मेष्यां लिङ्गं, नाऽपि असमवेतत्वेऽपि एकवचनवत् साधुत्वार्थं मेष्यां प्रयोगः स्त्रियां पुंलिङ्गस्य अनुशासनाभावेन साधुत्वे प्रमाणाभावात् प्रकृते पुंपशूनामपि सत्त्वेन व्यत्ययानुशासनस्य अप्रवृत्तेः। अतएव यत्र स्त्रीमात्रविषयं पुंलिङ्गं तत्रैव व्यत्ययानुशासना प्रवृत्तिः। न हि "दृष्टानुविधिश्छन्दसी"तिविधानं दर्शनाभावे प्राप्नोति। नाऽपि पुंलिङ्गस्य प्रातिपदिकार्थगतलिङ्गमात्रोपलक्षणत्वं। लक्षणायां प्रमाणाभावात् इतरथा बहुतरपदसङ्कोचानुरोधेन एकस्य "व्रीहीणां" इत्यस्यैव पदस्य प्रकृतपुरोडाशीयप्रकृतिद्रव्योपलक्षणत्वापत्तेः। अतो मन्त्रपदानां असति वचने मुख्यएवार्थे विनियोगात्तदनुरोधेन सङ्कोचोऽपि न युक्तः। वचने तु "पत्नींसन्नह्य प्राश्मा अग्निं भरत" इत्यादौ पत्न्यादेः संस्कार्यत्वात् प्रातिपदिकस्य अनेकव्यक्तिपरत्वेऽपि प्रत्येकव्यक्तिवृत्त्येकत्वविवक्षया एकवचनस्याऽपि लक्षणां विनैवोपपत्तेर्न सकलस्य मन्त्रस्य सङ्कोचः। सम्भवति हि अनेकास्वपि व्यक्तिषु शुक्लगुणस्य प्रत्येकवृत्तितया शुक्ला घटा इत्यादौ विशेषणत्ववदेकत्वस्य प्रत्येकवृत्तितया सर्वप्रातिपदिकार्थविशेषणत्वम्। नह्येवं लिङ्गस्य मेषीरूप-

प्रातिपदिकार्थे प्रवृत्तित्वादेकस्य कस्यामपि पत्न्यां पशौ वा प्रवृ-त्तित्वमस्ति। नचैवं प्रातिपदिकार्थबहुत्वेऽपि बहुवचनानापत्तौ "बहुषु बहुवचन"मित्यस्य निर्विषयत्वापत्तिः। बहुत्वस्य शाब्दप्रतीति-विषयत्वविवक्षायां तदुपपत्तेः। नचैवं "पशुना यजेत" इत्यादावपि एकवचनस्य प्रत्येकवृत्तित्वेनाप्युपपत्तेरनेकद्रव्योपादानेऽपि बाधानाप-त्तिः तत्र गुणानुरोधेन प्रधानावृत्तेरन्याय्यत्वात् प्रथमातिक्रमे-कारणाभावाच्चानेकद्रव्योपादाने प्रमाणाभावेन एकवचनेन ऐच्छिक-द्रव्यान्तरव्यावृत्त्युपपत्तेः। अतश्च "पत्नीं सन्नह्य प्राक्षे" इत्यादौ एक-वचनस्याऽनेकेषु लक्षणां विनैवोपपत्तेर्न मन्त्रसङ्कोचकत्वम्। नचैवं गुण-भूतेऽपि लक्षणापरिहारार्थं प्रधानस्य सङ्कोचाभ्युपगमे "अदितिः पाशान्" इत्यादौ बहुवचने लक्षणापरिहारार्थं प्रधानभूतस्य प्राति-पदिकादेरुत्कर्षोऽपि किं न स्यात् नह्येकस्मिन् बहुवचनं लक्षणां विना उपपद्यते इति वाच्यं गुणभूतानुरोधेन प्रधानभूतस्य सङ्कोचेऽपि प्रकरणबाधप्रसङ्गेनोत्कर्षे प्रमाणाभावात् सङ्कोचे तु अवर्ज्जनीयत्वान्नान्तरीयकसन्निधिबाधेऽपि उत्कर्षे नान्तरीयकत्वा-भावेन तद्बाधस्य अन्याय्यत्वात्। सामान्यसम्बन्धबोधकप्रमाणा-भावेनोत्कर्षानुपपत्तेश्च। अतः सिद्धं मेष्यामध्रिगुप्रैषोऽनङ्गमिति। प्रयोजनं "स्थूलपृषती"मित्यादौ अध्रिगुप्रैषे "प्रास्मै" इत्यूहः लिङ्गस्य प्रकृतौ समवेतत्वात् पूर्व्वपक्षे त्वनूहः साधुत्वार्थत्वादत एवास्योप-योगोऽपि। स्त्रीद्रव्यकत्वसादृश्यान्मेषीयागमात्रप्रकृतित्वाङ्गीकारे तु अध्रिगुप्रैषस्य अप्रवृत्तिरेव। सिद्धान्ते कत्वाचिन्तोद्घाटने तु मेष्या-मप्यूहः प्रागेव दर्शितः। वस्तुतस्तु आश्वलायनेन "पुंवन्मिथुन"

इत्यनेन स्त्रीपुंसमवाये पुंलिङ्गस्यैव विधानात् तत्वाचिन्तोद्घाटनेऽपि अनूहः। लक्षणयैव तु उभयलिङ्गप्रकाशनं वाचनिकम्। ८।१।१६।

आम्नानादन्यत्—मन्त्रोहप्रसङ्गात् साममन्त्रोहं विचारयितुं उपोद्घातमारभते। ज्योतिष्टोमे अग्निष्टोमस्तोत्रावान्तरप्रकरणे श्रुतं "न गिरागिरेति ब्रूयात् ऐरं कृत्वा उद्गेयं" इति, तत्र गिरापदगोतौ इरापदे ऊह इति वक्ष्यते। स च इरापदस्य गिरापदस्थानापत्तिं विना नेति साऽपि वक्ष्यते। तत्रेह सा किं नियता स्थानापत्तिरुत अनियता इति चिन्त्यते। तत्र यद्यपि तावदैरं कृत्वा उद्गेयं इत्यत्र इरापदविशिष्टोद्गानान्तरस्य स्तोत्राङ्गतया आरादुपकारकत्वादिना विधिः। अग्नीष्टोमस्तोत्राङ्गभूतयज्ञायज्ञीयगानापेक्षया गानान्तरत्वे प्रमाणाभावात् न गिरेति निषेधानुवादानुपपत्तेश्च। अत एव न गानोद्देशेन इरापदविधिः। तथात्वे इरापदस्य स्तोत्राक्षरविधया गानाङ्गत्वेऽपि तत्संस्कार्य्यस्य गिरापदस्य बाधे प्रमाणाभावेन निषेधानुवादानुपपत्तेः। अतो निषेधानुवादबलेन इरापदमात्रं गुणाभिधानात्मकस्तोत्ररूपे गिरापदकार्य्ये विधीयते उद्गेयमिति तु तत्संस्कारतया प्राप्तगानानुवादः। सम्भवति च इरापदस्य गिरापदकार्य्यकारित्वं तदर्थाभिधानात्। यथैव हि दृष्कर्त्तारमितिपदं महाभाष्यकारेण नकारलोपेन निष्कर्त्तारमित्यस्यार्थे व्याख्यातं तथैव गकारलोपेन इरापदस्याऽपि गिरापदार्थे व्याख्यानं नाऽनुपपन्नं। ततश्च यद्यपि प्रत्यक्षविधिना इरापदस्योत्पत्तिः स्तोत्राङ्गत्वञ्च। गिरापदस्य तु पाठात् उत्पत्तिः क्रमात् स्तोत्राङ्गत्वं "यज्ञायज्ञीयेन स्तुवीत" इति सामविध्यन्यथानुपपत्त्या वा आक्षिप्तम्।

साम्नो हि ऋगक्षराभिव्यक्तिद्वारैव स्तोत्राङ्गता इति ऋगक्षराणामपि तदङ्गत्वसिद्धिः। उभयथाऽपि गिरापदस्य ऋक्पदान्तरसाधारण्यमङ्गत्वमित्यपि दुर्ब्बलमेव। तथाऽपि गिरापदकार्य्यं इरापदं विधीयमानं तत्कार्य्यस्य गिरापदीयत्वप्रसिद्धिमुपजीवति उपजीव्यविरोधापत्ते र्न गिरापदस्य नित्यं बाधः अपि तु "न तौ पशौ करोती"तिवद्विकल्प एव इति प्राप्ते—

न तावदत्र गिरापदकार्य्यस्य उद्देश्यत्वं श्रुतम्। अपि तु निषेधानुवादबलेन गिरापदबाधकत्वमात्रं। तेन च यथैव तत्कार्य्यस्य साधनसाकाङ्क्षत्वादिरापदस्य च कार्य्यसाकाङ्क्षत्वात् कार्य्यजनकत्वं कल्प्यते तथा तद्बलेनैव गिरापदपाठस्याऽपि अग्निष्टोमस्तोत्रापूर्व्वसाधनत्वप्रतिबन्धोऽपि। अतएव कार्य्यस्याऽप्युद्देश्यता न गिरापदीयत्वेन अपि तु अग्निष्टोमस्तोत्रापूर्व्वसाधनीभूतविजातीयगुणाभिधानत्वेन तत्कार्य्योपन्नत्वव्यवहारस्तुतिनिषेधानुवादाभावे तत्कार्य्यव्यक्तेर्गिरापदीयत्वप्रसक्तिमात्रेण। अतएव पाठोऽपि गिरापदस्य यत्र "यज्ञायज्ञीयं पुच्छे गायती"ति चयने यज्ञायज्ञीयं साम विहितं, तत्र तस्य दृष्टविधया पुच्छाभिधानजनकऋगक्षराभिव्यक्तिजनकत्वेनैवोपयोगात् तत्र चेरापदविध्यभावेन गिरापदस्यैव आम्नानसिद्धस्य विनियोगात् सार्थकत्वम्। अतः सिद्धं निषेधानुवादबलेन गिरापदपाठादेरग्निष्टोमस्तोत्राङ्गतया गिरापदविनियोजकत्वाभावादिरापदस्य "ऐरं कृत्वा उद्गेयं "इति प्रत्यक्षविधिना विशिष्य विहितस्य नियतमेव तद्बाधकत्वं तत्कार्य्योपत्तिश्चेति। यत्त्वत्र तन्त्ररत्नशास्त्रदीपिकयोरुद्गानमुद्दिश्य इरापदविधिरित्युक्तं तत् स्तोभविषयागानाङ्गत्वे गानसंस्कार्य्य-

गुणाभिधानजनकगिरापदबाधकत्वानुपपत्तेरुत्तरयोरपि च गानाति देशे तदङ्गस्तोभातिदेशवदतिदेशापत्तेरुपेक्षितं। यदपि कैश्चिद्गान-संस्कार्य्यैरापदस्य स्तोत्राङ्गतया विधिरभिषवसंस्कृतपूतीकानामिव यागसाधनतया तद्वदेव च सम्भवत्प्रामिकस्याऽपि गानस्य शौम्रप्रवृत्त्या पुनर्विधानं गिरापदस्य गानसम्बन्धवारणार्थमित्युक्तम्। तदपि गान-वारणेऽपि गिरापदवारणानापत्तेरस्य प्रकृतगानसम्बन्धेऽपि गिरापद-मात्रगानवारणे तन्निषेधानुवादस्यैव शरणीकरणीयतया ततएवो-भयवारणे गानविधिवैयर्थ्यादुपेक्षितम्। तस्मादस्य इरापदमात्र-विधायकत्वं उन्नेयमिति च स्थानापत्तिप्राप्तानुवाद इत्येव तत्त्वम्।

८।१।१७।

अप्रगाणात्—तदिरापदं अप्रगीतं प्रयोक्तव्यं प्रगीतं वा इति सन्देहे—ऐरमित्यप्रगीतश्रवणात् अप्रगीतं। यदि त्वयं स्वार्थे तद्धितस्तदा इरां कृत्वा इत्यर्थावगमात् इरापदमात्रविधिः स्पष्ट एव। न हि प्रगीते-रापदादयं तद्धितः तथात्वे इकारस्य तालव्यत्वात् गीतिदशायाञ्च द्वित्वापत्तेः "तालव्यमायि यदृच"मिति च्छन्दोगसूत्रेण गीतिदशायां यत्रिमात्रात्मकतया द्वित्वतालव्यं तदायिभवतीत्यर्थकेनाऽयीभावविधा-नात् "आकारादित्वेन वृद्धाच्छ" इति पाणिनिसूत्रेण छप्रत्ययोत्पत्त्या-वायीरीयमिति रूपापत्तेः। अथ स्वार्थतद्धिते वैयर्थ्यापत्तेर्विकारार्थ एवायं तद्धितो विकारश्च इरापदस्य प्रगाणरूपो धर्म्म एवेति चेत्। तथात्वेऽपि प्रगाणरूपधर्म्माङ्गीकारे विशिष्टविधिगौरवापत्तेरप्रगाण-रूपस्य गिरापदवाचकत्वरूपस्य वा धर्म्मस्य तद्धितार्थत्वमङ्गीकृत्य-तद्धितस्याऽनुवादोपपत्तेः। न च अप्रगीत-इरापदमात्रविधाने उन्नेय

मित्यनुवादानुपपत्तिः । तस्य इरां कृत्वा अक्षरान्तरे उद्गेयमित्येवमर्थाङ्गीकारेण अनुवादोपपत्तेः । न च प्रकारान्तरेण गीतेरप्राप्तावपि गिरापदकार्य्यापत्त्या तत्प्राप्तिः गिरापदस्य अग्निष्टोमस्तोत्रसाधनत्वाभावेन इरापदस्य तत्कार्य्यापत्तौ प्रमाणाभावात् तद्गीतिस्तद्द्वारा तदपूर्व्वसाधनत्वाभावेन इरापदप्रसक्त्यभावात् । अतएव ऊहग्रन्थे "आइरा इरा चाऽदाच्चा सा" इति गानाम्नानमपि अप्रमाणमेव । न च एतस्य श्रुतिमूलकत्वात् न्यायस्यैवाऽप्रामाण्यं ऊहग्रन्थत्वसमाख्यया अस्य तर्कमूलत्वेन श्रुतिमूलत्वाभावात् । अतः सन्न्यायविरोधे अस्य अप्रामाण्यमेव । यत्तु तन्त्ररत्नादिग्रन्थवशात् अस्य गीत्याम्नानस्य वेदत्वकथनं तद्वैदिकानामूहग्रन्थेऽपाठादनादरणीयं इति प्राप्ते—

सत्यं इरापदस्वरूपस्यैव विधिर्न तु प्रगाणस्य । तथाऽपि प्रगाणाभावस्याऽपि अविधेयत्वात् कार्य्यापत्त्या गीतेरपि प्राप्तिर्न विरुध्यते । तथा हि यद्यपि न गिरापदस्य स्तोत्रापूर्व्वे उपयोगस्तथाऽपि गुणाभिधानरूपस्य कार्य्यस्य गिरापदेरापदयोरेकत्वाद्युक्तत्वया धर्म्मलाभः । यद्यपि न गुणाभिधानस्वरूपार्थो धर्म्माः, तथाऽपि गुणाभिधानजन्यस्य अपूर्व्वस्यैकस्य एव अग्निष्टोमस्तोत्रे चयनादौ च उपयोगाद्धर्म्माणाञ्च गीत्यादीनां गिरापदकार्य्यगुणाभिधानजन्यावान्तरापूर्व्वप्रयुक्तत्वस्य एव दीक्षणीयावाङ्नियमन्यायेन अङ्गीकाराच्चयनापूर्व्वसाधनीभूतगिरापदावान्तरकार्य्यापन्ने अग्निष्टोमस्तोत्रापूर्व्वसाधनीभूततादृशकार्य्यजनकेरापदे युक्तैव तद्धर्म्मप्राप्तिः । माऽस्तु वा अवान्तरकार्य्ये भेदमङ्गीकृत्य कार्य्यापत्तिः । तथाऽपि गिरापदबाधक-

तया तत्स्थानापत्तिस्तावदस्त्येव इरापदस्य। अतश्च इरापदस्य प्रकरणात् स्तोत्राङ्गत्वेऽवगते गीतिरूपधर्म्माकाङ्क्षायां बाधकत्वरूप-स्थानापत्त्या उपस्थितस्य गिरापदस्य धर्म्मातिदेशेन किञ्चिद्बाधक-मस्ति। आवश्यकश्च गीतेश्चयनापूर्व्वसाधनीभूतगिरापदाङ्गत्वं। वस्तुतस्तु यथैव "यज्ञायज्ञीयं पुच्छे गायती"ति वचनेन यज्ञायज्ञीयस्य चयने उपयोगस्तथैव "यज्ञायज्ञीयेन स्तुवीत" इति वचनेन अग्निष्टोम-स्तोत्रेऽपि। अतश्च गीत्यंशस्य यावच्चयने स्वाश्रयगिरापदोपयोग-कल्पनद्वारा दूरस्थचयनोपयोगकल्पनं तावत् तत्पूर्व्वमेव वाऽग्निष्टोम-स्तोत्राङ्गभूतेरापदद्वारकत्वकल्पनया स्तोत्रापयोगोऽपीति उपदेशेनैव तत्प्राप्तेर्न गिरापदगीतेरिरापदेऽतिदेशः। यद्यपि च अग्निष्टोम-स्तोत्रेऽपि आर्च्चिके पुरस्तादुपरिष्टाच्च गिरापदस्याऽपि उपयोगात् तत्स्थानापत्तिरिरापदस्य अग्निष्टोमस्तोत्रसाधनत्वस्य समानत्वादित्या-शङ्क्यते। तथाऽपि आर्च्चिकोद्गोग्रयोरवान्तरकार्य्यभेदाद्भेदेऽपि वा अप्रगीतस्य एव गिरापदस्यार्च्चिके पाठाद् गिरापदगीतेर्गिरापद-द्वारा चयनादावेवोपयोगेन अग्निष्टोमस्तोत्र उपयोगाभावाच्च तत्-कार्य्यापत्त्यतिदेशेन तद्गीतेरिरापदेऽतिदेश ऊहो वा। अपि तु उक्त-रीत्या उपदेशेनैव। तत्त्वं तु "ऐरं कृत्वा उद्गेय"मित्यत्र न इरापदाक्ष-राणि विधीयन्ते। गिरापदयुक्तपाठेऽपि तत्सत्त्वात्। अपितु निषेधानु-वादबलात् गकारपरिसंख्यामात्रमिराविधिफलं। अतश्च "गीते गाइरावादाच्चास।" इत्येवं विधाय गिरापदवृत्तित्वेन सम्मताया वस्तुत इराक्षरधर्म्मत्वाद्गकारसत्त्व इव तदसत्त्वेऽपि स्वाश्रयवृत्तित्वाच्चतेर्न गिराप्दगीतेरिरापदे स्वतन्त्र उपदेशो गीते सर्व्वथा प्रगीतमेव इरापदम्। ८। १। १८।

इति श्रीखण्डदेवकृतौ भाट्टदीपिकायां नवमाध्यायस्य प्रथमः पादः।

# नवमाध्यायः ।

## द्वितीयपादः ।

। सामानि ॥ रथन्तरादिशब्दानां सामादिशब्दानाञ्च गीतिमात्रवाचित्वं गीतिविशेषत्वादिधर्म्मवाचित्वं वा सिद्धमेवोत्तर विवक्षया स्मार्य्यते। अथवा योऽयमूहोनाम ग्रन्थविशेषः सामगैः पठ्यते स किं पौरुषेय उत अपौरुषेय इति चिन्तायाम्—कर्त्तृस्मरणा भावरूपवेदापौरुषेयत्वहेतोरत्राऽपि तुल्यत्वादितरथा तस्याऽनैकान्तिकत्वेन वेदस्याऽपि अपौरुषेयत्वानापत्तेः स्वाध्यायानध्यायपरिपालनस्य च तुल्यत्वादूह इति समाख्यायाश्च रूढ़त्वेनाऽपि नेतुं शक्यत्वादितरथा कर्त्तृस्मरणाभावेऽपि समाख्याबलेन पौरुषेयत्वाङ्गीकरणे काठकादिसमाख्यया वेदस्याऽपि पौरुषेयत्वापत्तेः अपौरुषेय उहग्रन्थ इति प्राप्ते—

ऊह वितर्के इति स्मृत्या तर्कप्रसवत्वरूपयोगेनैव समाख्योपपत्तौ रूढ़त्वप्रमाणाभावात्। ऊहग्रन्थे च योनिग्रन्थे योन्युत्पन्नस्यैव साम्नो “यद्योन्यां गायति तदुत्तरयोर्गायति” इत्यादिना अतिदिष्टस्य न्यायेन याद्दशस्योत्तरादौ पठनीयस्य सौकर्य्यार्थं पाठादस्याऽपि वेदत्वे सर्व्वासां आम्नानसिद्धतया योनित्वप्रसङ्गेन योन्युत्तरादिविभागस्य अतिदेशशास्त्रस्य च वैयर्थ्यापत्तेः पौरुषेयत्वमेव। अतएव बलात् पौरुषेयत्वसाधकप्रमाणान्तराभावविशिष्टकर्त्तृस्मरणाभाव एव पौरुषेयत्वाभावसाधक इति नाऽनैकान्तिकता। यद्यपि च तत्र

ऋचः सामानि च स्वरूपेण अपौरुषेयाण्येव। तथाऽपि उत्तरादिषु न्यायसिद्धातिदिष्टसामरचनाप्रकारः पौरुषेयः। अतएव स्वाध्यायाध्ययनाध्यायादिपरिपालनं ऋगादिविषयत्वादन्यथासिद्धं। कर्तृस्मरणाभावस्तु मूलश्रुतिकल्पनार्थं मूलश्रुतिकल्पनाभावादप्युपपद्यते। मन्वादिस्मृतिषु मन्वादिवैशिष्ट्येन श्रुतिकल्पनाय कर्तृस्मरणमावश्यकं, प्रकृते तु न्यायमूलत्वात्तदभावेऽपि न काचित् क्षतिः। अतएव सन्न्यायविरोधे भवत्यप्रमाण्यं। ननु अन्यस्मृतिवन्मूलभूतश्रुतिकल्पनया न्यायस्यैव प्राभासीकरणं। अतएव अग्रे सामोहन्यायविचारोऽपि सङ्गच्छते। १। २। १।

। कर्म्मवा॥ साम्नां किं ऋचं प्रति प्राधान्यं उत गुणत्वं इति सन्देहे सत्यपि क्रमप्रकरणाभ्यां ऋचां स्तोत्राङ्गत्वेन विनियोगे साम्नामपि तत एव स्तोत्राङ्गत्वोपपत्तेर्न तावत् परस्परं गुणप्रधानभावः। यदि तु योग्यतारूपलिङ्गं पुरस्क्रियते ततस्तोभाक्षरवदृगक्षराणामपि गीतिकालपरिच्छेदकत्वयोग्यत्वात् सामाङ्गत्वं, न च साम्नामपि ऋगक्षराभिव्यञ्जकत्वलिङ्गेन ऋगङ्गता उभयथोपपत्तौ "ऋचि अध्यूढं साम गायति यद्योन्यां गायति तदुत्तरयोर्गायति कवतीषु रथन्तरं गायती"त्यादौ सप्तमीश्रुत्या ऋचां सामाङ्गत्वप्रतीतेः। संयुक्ताक्षरस्यैव गुणाभिधानरूपस्तोत्रजनकत्वेन विश्लिष्टाक्षराभिव्यञ्जकसाम्नः प्रयोजनविरोधितया अभिव्यञ्जकत्वानुपपत्तेश्च। अतएव प्रयाजशेषन्यायेन सप्तम्याः प्राधान्ये लक्षणा इत्यपि अपास्तं विभागदक्षपत्न्यधिकरणन्यायेन प्राचीनप्रयाजशेषन्यायस्य अपहस्तितत्वाच्च। एवञ्च स्तोत्राङ्गतया ऋचां पृथगुच्चारणं कृत्वा सामाधारतया पुनः कार्य्यं।

सिद्धेवं क्रमप्रकरणसहकृतलिङ्गेनैव साम्नां ऋगक्षराभिव्यक्तिद्वारा स्तोत्रोपयोगे "यद्गायत्रीयेण स्तुवीत बृहत् पृष्ठं भवति रथन्तरं पृष्ठं भवति" इत्यादि स्तोत्रे विनियोगवैयर्थ्यं । अतश्च वैयर्थ्यपरिहारार्थमपि आरादुपकारकतया साम्नः स्तोत्राङ्गत्वं । न चैवं करणत्वनिर्देशानुपपत्तिः आरादुपकारकस्याऽपि बृहस्पतिसवनवदपूर्व्वद्वारा स्तोत्रोपकारं प्रति करणत्वोपपत्तेः । ऋचान्तु सामाङ्गभूतानामपि पृथग्गुणारम्भाभावेऽप्यानुषङ्गिकं स्तोत्रोपकारकत्वं इत्यपि सुवचमिति प्राप्ते ।

स्तोत्रशब्दस्य याज्ञिकव्यवहारे प्रगीतमन्त्रसाध्यगुणाभिधानत्वावगते रितरथा शास्त्रापेक्षया स्तोत्रस्य भेदानुपपत्तेरवश्यं गानविशिष्टाक्षरव्यक्तिसंश्लेषमाणजन्यगुणाभिधानस्यैव स्तोत्रत्वाध्यवसायात् तादृशस्तोत्रस्य च गानाभिव्यक्ताक्षरसाध्यत्वेन गानं विना अनुपपत्तेर्युक्तमेवसाम्नः ऋगक्षराभिव्यक्तिद्वारा स्तोत्रसाधनत्वमिति क्रमप्रकरणसहकृतलिङ्गेनैव ऋचां स्तोत्राङ्गत्वमिव साम्नामपि ऋगक्षराभिव्यक्त्यर्थं, अतएव ऋगक्षराभिव्यक्त्यर्थस्यैव साम्न आनुषङ्गिकतया ऋगाधारत्वस्याऽपि प्राप्ते "ऋचि अध्यूढं साम गायति" इत्यनुवादः । भावस्य वाचकस्य अनुवादकत्वे तत्तत्साम्नां तत्तदृगाधारत्वस्य पाठादिनैव प्राप्ते ऋचः सामगतत्वादिलोऽपि । "यद्योन्यां गायति तदुत्तरयो"रित्यादौ तु सप्तम्याः प्राधान्यवचना अन्यथा अतिदेशानुपपत्तेः । न हि अत्र उत्तरयोः सामाधारत्वविधिः सम्भवति । गुणानुरोधेन प्राधानावृत्तेरन्याय्यत्वात् । "एकं साम तृचे क्रियते" इत्यनेन तृचाधारत्वस्य अवगते विधानेन ऋक्त्रयस्य विकल्पानुपपत्तेश्च । एवं "साम तृचे क्रियते" इत्यनेनैव तृचाधारत्वसिद्धेः पाठादिना च

विवक्षितऋक्प्राप्त्युपपत्तेयंद्योन्यां इत्यस्य वैयर्थ्यापत्तेश्च। अतो ऽतिदेश एवानेन उत्तरयोर्विधेय इति तयोः प्राधान्यसिद्ध्यर्थं लक्षणा आवश्यकी। एतेन ऋचामुक्तवचनैः सामाङ्गत्वेऽपि आनुषङ्गिक्या अक्षराभिव्यक्तेरपि जायमानत्वात् यामाद्यर्थैव स्तोत्रपदार्थनिर्व्वाहोपपत्ते र्नसाम्न ऋचं प्रति अङ्गत्वं इति परास्तं। ऋगङ्गत्वाभावे साम्नो ऋगन्तरे अतिदेशानुपपत्तेः। अत ऋचां प्राधान्यादुत्तरावर्णवशेन साम्नोऽन्यथाभावात्मक ऊहोऽपि वक्ष्यमाणो न अनुपपन्नः। ९। २। २।

। तृचे॥ तच्च सामयोन्यामुत्पन्नमपि उत्तरयोरतिदिष्टत्वात् तृचे गेयमित्यविवादमेव। तत्राऽपि च यद्यपि ऋचां प्रधानत्वात् प्रतिप्रधानं गुणावृत्ते र्न्याय्यत्वात् प्रत्यृचं समापनीयमित्यपि सिद्धमेव। तथाऽपि तदेव आक्षिप्य समाधीयते। "एकं साम तृचे क्रियते स्तोत्रीय"मिति वचने नहि तावदृगुद्देशेन सामविधिः तस्य लिङ्गादेव प्राप्तेः। नाऽपि त्रित्वविशिष्ट ऋगुद्देशेन विशिष्टोद्देशे वाक्यभेदात्। नाऽपि स्तोत्रीय ऋगुद्देशेन त्रित्वविधिः एकप्रसरभङ्गापत्तेः। तत्तत् स्तोत्रेषु स्तोमान्तरविधानेन त्रित्वविध्यनुपपत्तेश्च। अतएव स्तोत्रो द्देशनापि त्रित्वस्य ऋक्परिच्छेदद्वारा साक्षाद्वा विधिः। अस्य ज्योतिष्टोमप्रकरणे समाम्नानेऽपि स्तोत्रविशेषप्रकरणाभावात् प्रकरणेन स्तोत्रस्य उद्देश्यत्वानुपपत्तेश्च। स्तोत्रस्य सामविशेषणत्वेनोपादानात् स्तोत्रीयपदेनापि तत् प्रतिपादनानुपपत्तेश्च। त्रित्वस्य ऋग्विशेषणत्वेनोपात्तस्य स्तोत्रोद्देशेन विध्यनुपपत्तेश्च। स्तोत्रोद्देशेन त्रित्वविशिष्ट ऋग्विधानन्तु ऋचां क्रमप्रकरणादेव स्तोत्रे प्राप्तत्वात् पूर्व्वोक्तदूषणगणापत्तेश्च अनुपपन्नं। अतः सप्तमीबलात् त्रित्वविशिष्ट

ऋचामिव सामोद्देशेन विधिः। उद्देश्यसमर्पकञ्च स्तोत्रीयपदम्। स्तोत्रीयाश्रयोग्यताबलात् सामैवेति सामेत्यनुवादः। सामपदमेव वा तथाऽस्तु। अवभृथाद्यङ्गसामस्वपि च तृचाधारविधिरस्तु। स्तोत्रपदञ्च उपलक्षणम्। सर्व्वथा त्रित्वविशिष्टानामृचां साम प्रति गुणत्वात् गुणानुरोधेन प्रधानावृत्तेरन्याय्यत्वात् व्यासज्य अवयवशो गेयं। एवञ्च यद्योन्यां इति वाक्यं नातिदेशविधिरपि तु साम-साधारण्यानुवादस्त्रित्वापेक्षिन ऋग्विशेषसमर्पक इति प्राप्ते—

साधारणतया तृचविधौ पाठादेव योनिऋक् प्राप्तेरुत्तरयोरपि उत्तरा ग्रन्थपठितयोः क्रमप्रकरणादिना तत्तत्सामाधारत्वेन प्राप्ति-सम्भवात्। इतरथा तत्तत् सामाधारत्वेन तत्तदुत्तराप्राप्तेः स्ववाऽप्य-सम्भवापत्ते "यद्योन्यां गायति तदुत्तरयोर्गायती"त्यस्य वैयर्थ्यापत्तिः। अतोऽवश्यं क्रमप्रकरणादिना तत्तत्स्तोत्राङ्गतया प्राप्तायां योन्यु-त्तरादिरूपाणां ऋचां स्तोत्रविधिवशेन समुच्चयावगतौ उत्तरयोरपि स्तोत्राङ्गत्वनिर्व्वाहार्थं यत्किञ्चित् सामप्राप्तौ यद्योन्यामित्यतिदेशेन योनिसाम नियम्यते। यथाप्राप्तस्यैव च नियम इति साम्नो ऋग-क्षराभिव्यक्त्यर्थत्वेनैव प्राप्तत्वात् ऋचां प्राधान्यावगतेः प्रतिप्रधानं गुणावृत्तिन्यायेन प्रत्येकमेव गेयम्। एवञ्च "एकं साम तृचे क्रियते" इत्यनेन तृचोद्देशेन स्तोत्रीयविधानादवभृथाद्यङ्गभूतपरिसाम्नां चयनाद्यङ्गभूतषाड्हिकसाम्नां च नोत्तरासु गानम्। अत्र हि त्रित्वस्य ऋच्यन्वयव्युत्पत्ते र्न विशिष्टोद्देशे वाक्यभेदः। यद्योन्या-मित्यनेन उपसंहाराच्च स्तोत्रीयस्य सामरूपतासिद्धेः सामेत्यनुवादः। वस्तुतस्तु उत्तराणां अवान्तरप्रकरणात् तत्तत् स्तोत्राङ्गत्वेनैव प्राप्ते-

एवञ्चाश्रयत्वे प्रमाणाभावात् तत्र ऋक्प्रमाणाप्रसक्तेरेवं साम इत्यादे र्नोक्तप्रयोजनलाभः। अतएव तत्र सामविध्यन्वयानुपपत्त्या तदाश्रय-योनिमात्रस्यैव विनियोगात् तत्स्वरगुणाद्यभिधानस्यैवाऽऽश्रयत्वादा-वुपयोगः। किन्तु द्वयोरेकेन सामैकत्वविधिः। सामेति विशिष्ट-कारकविधानेऽपि सामैकत्वविधेस्तात्पर्य्यात्। एकपदं स्तोत्रीय-पदञ्च अनुवाद एव सामैकत्वविधिप्रयोजनञ्च। यत्र विकृतौ अग्नि-ष्टुदादौ “आग्नेयीषु स्तुवते” इति प्राकृतयोन्युत्तराबाधेन ऋगन्तर-विधानं। तासाञ्च विकृतिप्रकरणे पाठोऽपि तु दाशतयीभ्यो आन-यनं तत्र तु स्तोमसंख्यानुरोधेनानीतासु ऋक्षु प्राकृतसामपाठे अनि-यमेन द्वित्रितावत्संख्याकसाम्नां त्रिनवादिसंख्याक ऋक्षु पाठ-प्रसक्तौ तृच एव एकैकसाम्नां पाठ ऋगन्तरेषु माध्यन्दिनादिपवमाने सामान्तरागम इति। ८। २। ३।

। तदभ्यासः॥ तिसृषु प्रत्येकं गीयमानं एकं साम समास्वेव गेयं न विषमासु। न्यूनासु गाने सामैकदेशस्य लोपात्स्वसंग्रहापत्तेः। अधिकपरिमाणासु गाने ऋगंशे सामदर्शनरूपविनाशापत्तौ तत्र सामैकदेशस्यावृत्त्यापत्तेः। तस्मात् समासु गानम्। इदञ्च अग्निष्टुदादिविषयमेव। तत्राऽगम्यमानानां ऋचां सामपरिमित-च्छन्दसामेव आनयनात्। न तु अन्यत्र समयोर्विषमयोर्वा उत्तराग्रन्थपठितोत्तरयोर्योनेश्च ग्रामप्रकारत्वादिविनिर्मुक्तत्वे त्यागा-योगात् तत्र साम्यवैषम्यचिन्तानुपपत्तेः। ८। २। ४।

। नैमित्तिकं॥ — “यद्योन्यां गायति तदुत्तरयो”रित्यत्र उत्तराग्रन्थेन योन्युत्तरयोरुत्तराग्रन्थपठितयोश्चोत्तरयोर्ग्रहणं उत उत्तराग्रन्थपठि-

तयोरेव इति सन्देहे उत्तरशब्दस्य प्रस्तारमुत्तरं वर्षिष्ठः साद्यमिमुग्ध्रोमुत्तरा दीक्षयतीत्यादौ सम्बन्धिशब्दत्वदर्शनात् येन योनेः प्रथमः पठिता सैवोत्तरा। ततश्च योनिग्रन्थे रथन्तरयोनेः प्रथमः बृहद्योनेः पाठात् तस्याः रथन्तरस्य गानं उत्तराग्रन्थे च रथन्तरयोनेः परतो "नत्वा वां मन्यो दिव्यो न पार्थिव" इत्यस्याः पाठात् तस्यामपि विकल्पेन इति प्राप्ते—

बृहद्योनेरथन्तरयोन्युत्तरत्वेऽपि तस्यामुत्तराशब्दस्य वैदिकैरप्रयुज्यमानत्वात् उत्तराशब्दोऽयं उत्तराग्रन्थपठितोत्तरासु वैदिकप्रयोगात् प्रसम्बन्धितयैव रूढ़ः। ततश्च सम्बन्धिशब्दस्य प्रतिसम्बन्धिग्रन्थानसापेक्षत्वेन विलम्बेन पाठोपस्थापकत्वात् अन्यत्र सम्बन्धिशब्दत्वेऽपि प्रकृते असम्बन्धिशब्द एवायं। ततश्च उत्तराग्रन्थपठितोत्तराणामेव झटित्युपस्थापक इति तासामेव ग्रहणे प्रत्यक्षक्रमाभ्यां च उत्तराग्रन्थपठितानां उत्तराणां तत्तत् स्तोत्रायत्वप्रतीतेरिदमेव युक्तम्। ९। २। ४।

। एवं वा ॥ द्वादशाहे षड़हमतचतुर्थमह"रेकविंशः षोड़शी वैराजं साम" इत्याम्नातं, अत्र प्रकृतिप्राप्तसर्व्वस्तोमेषु एकविंशस्तोमः षोड़शिसंस्था पृष्ठस्तोमे च वैराजं साम इत्यनेकगुणविशिष्टं कर्म्म विहितं तत्र च वैशोकं नाम ब्रह्मसाम, "अतिजगतीषु स्तुवीत" इति ब्रह्मणा छन्दसि स्तोत्रे वैशोकं साम विहितं तच्च अतिजगत्यां उत्पन्नं उत्तराग्रन्थे च उत्तरे द्वे बृहत्यौ तत्र संशयपरिहाराय उत्तराग्रन्थपठितयोरपि उत्तरयोर्वाचस्तोमादौ सार्थक्यमङ्गीकृत्य अतिजगत्यावेव द्वे दाशतयीभ्यः समानीय समास्वेव गानं। न च

आनीतानां अङ्गत्वे प्रमाणाभावः न्यायसहकृततृचगानविधेरेव नियामकत्वात्। न च प्रकरणेन न्यायबाधः "अतिजगतीषु स्तुवीत" इति अतिजगतीबहुत्वविधिना न्यायस्य उज्जीवनात्। न च प्राप्तस्तोत्रानुवादेन वैशेषिकातिजगतीबहुत्वयोर्विधाने वाक्यभेदः अतिदेशप्रवृत्तेः पूर्व्वमस्य प्रवृत्त्या विशिष्टस्तोत्रविध्युपपत्तेः। अतएव यद्योन्यामिति सामान्यवचनं सामान्तरविषयमिति प्राप्ते—

वहिः पवमानातिरिक्तस्तोत्रे एकविंशस्तोमानुरोधेन ऋगभ्यासस्य आवश्यकत्वात् एकस्या अपि अतिजगत्याः सप्तकृत्व आवृत्ते र्बहुत्वस्य प्राप्ततया अनुवादोपपत्तेरस्य साममात्रविधिपरत्वादुत्तराग्रन्थपठितवृहतीप्रकरणाद्यनुरोधेन न्यायस्यैव बाधात् संशरमपि स्तोत्रत्य वृहत्योरेव गेयम्। ६। २। ५।

। प्रागाथिकन्तु ॥ ज्योतिष्टोमे वृहद्रथन्तरे सामनी वृहत्योरुत्पन्ने। तयोरुत्तराग्रन्थे एकैकस्य एकैका पङ्क्तिच्छन्दस्कोत्तरा। तत्रेदं वचनं "नवै वृहद्रथन्तरं एकच्छन्दः यत्तयोः पूर्व्वा वृहती ककुभावुत्तरे" इति। तत्र किं पङ्क्तिच्छन्दस्कां उत्तरां परित्यज्य द्वे द्वे ककुभौ दाशतयीभ्यः समानेतव्ये उत वृहतीं योनिं उत्तरां च पङ्क्तिं प्रग्रथ्य ककुभावुत्तरे सम्पादनीये इति चिन्तायामाह—

प्रग्रथनेन मुख्यककुप्सम्पत्त्यभावात् अक्षरसाम्यमात्रेण मुख्यककुप्शब्दस्य गौणत्वापत्तेः—जघन्योत्तराशब्दस्यैवासम्बन्धिशब्दत्वं परित्यज्य लक्षणां योन्युत्तरकाललक्षणां वा अङ्गीकृत्यककुप्विध्यङ्गीकारात् स्वाभाविकककुभोरेवाऽऽनयनम्। एवञ्च मुख्यतृचगानसम्पत्तिरपि इति प्राप्ते—

तथात्वे "पादं पुनरारभते" इत्यस्य वैयर्थ्यापत्तेः ककुप्पदं एव गेयं मन्त्रोत्पत्य उत्तरोद्देशेन ककुप्त्वविधानात्—तयोरेव प्रथनेन ककुप्त्वसम्पादनम्। एवं वैदिकानां—बार्हतप्रागाथ्यसमाख्या उत्तराग्रन्थे पङ्क्तिः पाठश्च उपपन्नो भवति, तृचत्वोपपत्तिः सामान्य-विधित्वात् तथाऽनुपपन्नाऽपि न दुष्यति। प्रग्रथनं च आद्यां बृहतीं सकृत् पठित्वा तस्या अन्त्यपादेन सह द्वितीयाया अर्द्धं च पठित्वा तदन्त्यपादेन सह द्वितीयान्त्याऽर्द्धपठनरूपं बोध्यम्। तेन द्वितीया ककुप् अष्टाविंशत्यक्षरैव। आद्यायाः सप्तविंशत्यक्षरत्वेऽपि अल्पा-न्तरत्वान्न दोषः। ९। २। ६।

एवं वा॥ ज्योतिष्टोम एव माध्यन्दिनपवमाने "त्रिच्छन्दा आवापोमाध्यन्दिनः पवमानः पञ्चसाम" इति श्रुतं। तदर्थ-विवरणानि च "गायत्रामहीयवे गायत्रे तृचे भवतः रौरवयौधाजये-बार्हते तृचे* भवत औशनसमन्त्यं त्रिष्टुप्सि"ति अत्र रौरवयौधा-जययोः† पूर्व्वा बृहती उत्तरा विष्टारपङ्क्तिः समाम्नाता। तदिह विशिष्येव बार्हते तृचे इति बार्हततृचाम्नानात् उत्तरे द्वे बृहती-च्छन्दस्के एव समानेतव्ये इति प्राप्ते—

नाऽत्र रौरवयौधाजयोद्देशेन बार्हतविधिः योनेस्ताद्रूप्याः प्राप्तत्वात्। नाऽपि तृचाधिकरणत्वविधिः प्राप्तत्वादेव। नाऽपि बार्हततृचाधिकरणत्वविधिः विशिष्टस्याऽव्युत्पन्नत्वात्। अतएव न विशिष्टोद्देशेन सामद्वयविधिः। तृचोद्देशेन बृहतीच्छन्दस्कत्वविधिः

* तृते भवत इति पाठान्तरम्।

† यौधाजययोरिति पाठान्तरम्।

परं भवेत्। सोऽपि अवच्छेदकावच्छेदेन सामानाधिकरण्येन वा उभयथा सम्भवन् अवच्छेदकावच्छेनाऽऽश्रीयमाणे—प्रगाथस्मरणसमाम्नातपाठादिबाधप्रसक्तेः तदनुरोधेन सामानाधिकरण्येनैव आश्रीयते।

एवंच वस्तुतस्तस्य प्राप्तत्वात् एतानि वाक्यानि पूर्व्ववाक्यार्थविवरणार्थानि अनुवादकानि इत्येव ध्येयम् *। नह्येतानि उत्तरास्वसामप्राप्त्यर्थानि इति केषाञ्चिदुक्तं युक्तं तद्योन्यामित्यनेनैव तत्प्राप्तेः। सर्व्वथा सिद्धमत्रापि प्रग्रथनम्।

नचैवं वार्हत इतिवचनस्य योनिबृहतीमत्त्वेनैवोपपत्तौ प्रग्रथने प्रमाणाभावः तृचसम्पत्तिग्रथनस्मरणादिनैव तत्सिद्धेः। एवंच प्रथितबृहतीत्वस्याऽवच्छेदकावच्छेदेन विशेषणत्वोपपत्तावपि लक्षणापत्तेस्तन्नाश्रितमिति ध्येयम्।

तत्र आद्यां बृहतीं षट्त्रिंशदक्षरां पठित्वा तदन्त्यपादस्य द्विरावृत्त्या उत्तरायाविष्टारपङ्क्तेः चत्वारिंशदक्षराया आद्यार्द्धर्चेन एका बृहती तदन्त्यपादस्य द्विरावृत्त्या द्वितीयार्द्धर्चेनाऽपरा इत्येवं रूपं प्रग्रथनं बोध्यम्। अतएव सर्व्वत्राऽत्यान्तरत्वात् किञ्चिदक्षरन्यूनत्वेऽपि न तच्छन्दस्कत्वविघातः।

यत्तु भाष्यकारेण षष्टिस्त्रिष्टुभो माध्यन्दिनं सवनं इति लिङ्गमपि प्रग्रथनएवोपपद्यते। तथा हि माध्यन्दिने सवने पञ्चस्तोत्राणि एको माध्यन्दिनः पवमानः पञ्चदशस्तोमकः। पञ्चदशानि चत्वारि पृष्ठानि। तत्र पवमाने गायत्रामहीयवसाम्नोः षट् गायत्र्यः रौरव

---

* अनुवादकार्थं इत्यवधेयम् इतिपाठान्तरं।

यौधाजययोः षड्बृहत्यः * औशनसमाम्नः त्रिंशःत्रिष्टुभः। होतुः पृष्ठे पञ्चबृहत्योद्वादश ककुभः। विष्टुतिप्रकारे तथैवाऽऽम्नानेन छन्दस्तावद्वारं अभ्यासात्। मैत्रावरुणपृष्ठे सप्तदश गायत्राः ब्राह्मणाच्छंस्यच्छावाकपृष्ठयोरपि सप्तदश सप्तदश बृहत्य एकैकाहृचाभ्यासेनैव। एवंच पञ्चचत्वारिंशद्बृहत्यो मुख्याःअष्टौ गायत्र्यो! चतुर्विंशत्यक्षराणां त्रिपादानां मध्ये चतसृणां गायत्रीणां द्वादशभिरष्टाक्षरैः पादैः सहिताद्वादश पूर्व्वोक्ता अष्टाविंशत्यक्षराः ककुभोद्वादशषट्त्रिंशदक्षरात्मिका बृहत्यो भवन्ति। तदेवं सप्तपञ्चाशद्बृहत्यः ता आसां† अष्टा गायत्रीणां मध्ये अवशिष्टाभ्यां द्वाभ्यां सह सप्तदशभिर्गायत्रीभिरेकैकेन पादेन मिलिताः सप्तपञ्चाशद्बृहत्यः चतुश्चत्वारिंशदक्षरात्मिकाः सप्तपञ्चाशत्त्रिष्टुभो भवन्ति एवमाद्याभिस्तिसृभिः त्रिष्टुब्भिः षष्टिस्त्रिष्टुभः। तदेतल्लिङ्गं प्रग्रथनएवोपपद्यते। अन्यथा पवमाने अन्यासां बृहतीनां होतुः पृष्ठे च अन्यासां ककुभां दाशतयीभ्यः समानयने षष्टिसंख्यानुपपत्तेः। अत्र हि न त्रिष्टुभोमाध्यन्दिनं सवनमिति यथाश्रुतं सामानाधिकरण्यं उपपद्यते बाधात्। अतो जघन्ये माध्यन्दिनसवनपदएव लक्षणामङ्गीकृत्य माध्यन्दिनसवनाङ्गभूता—याः सामवेदे समाम्नातास्ताः षष्टिरित्यर्थावगतेर्दाशतयीभ्यः समानयने लिङ्गानुपपत्तिरित्युक्तम्।

तल्लक्षणायामावश्यकत्वे लाघवान्माध्यन्दिनसवनस्तोत्रीयाणां एव लक्षणा तत आम्नातानामपि तत्त्वापपत्तेरुपेक्षितम्। ८। २। ६॥

---

* औशनसमानस्त्रिंशः त्रिष्टुभः इति पाठान्तरम्।

† एषामिति पाठान्तरं।

एवंवा ॥ "पञ्चच्छन्दा आवाप आर्भवः पवमानः सप्तसामा" इत्येतद्विवरणार्थेषु—"गायत्रसंहिते गायत्रे तृचे भवतः श्यावाश्वान्धीगवे आनुष्टुभे तृचे उष्णिहि सफं पौष्कलं ककुभि कावमन्त्यं जगतीषु" इत्येतेषु—श्यावाश्वान्धीगवयोः पूर्व्वानुष्टुबुत्तरे गायत्र्यौ श्रुते। तत्र किं तास्वेव प्रग्रथनं विनैव च तृचगानं उत प्रग्रथनेन इति चिन्तायाम्

पूर्व्वत्र लक्षणां विनैव तृचत्वसामानधिकरण्येन बृहतीच्छन्दस्कत्वोपपत्तावपि एकस्या एवोत्तरायां पाठेन तृचगानानुपपत्तेर्युक्तं प्रग्रथनं। प्रकृते तु उत्तराद्वयस्याऽपि पाठात् तृचगानोपपत्तेः प्रग्रथने प्रमाणाभाव इति प्राप्ते—

* प्रमाणान्तराभावेऽपि प्रगाथस्मरणमात्रयोरिव प्रमाणत्वात् प्रग्रथनं। तच्च न पूर्व्ववद्द्विरावृत्त्या। अपि तु अन्त्यान्त्यपादस्य सकृदावृत्त्यैव तावतैव तृचस्य अनुष्टुप्त्वोपपत्तेः। अष्टाक्षरेण हि पादेन अन्विता गायत्री द्वात्रिंशदक्षरा अनुष्टुब्भवति। स्मरणवशादपि चैवं प्रग्रथनम्।

लिङ्गञ्च "चतुर्व्विंशतिर्जगत्यस्तृतीयसवनमेका च ककुब्" इति प्रग्रथनएवोपपद्यते। तथा हि तृतीयसवने स्तोत्रद्वयं सप्तदश आर्भवः पवमानः एकविंशञ्च अग्निष्टोमस्तोत्रं। आद्ये आद्यसाम्नोः षड्गायत्र्यः तास्तिस्रोजगत्यः अष्टचत्वारिंशदक्षरात्मिकाः। ततस्तृतीयचतुर्थसाम्नोः षडनुष्टुभः तावतस्रोजगत्यः। पञ्चमषष्ठसाम्नोरुष्णिक्ककुभे द्वे ऋचौ अष्टाविंशत्यक्षरे सेका जगती अष्टौ-अक्षराणि अवशिष्यन्ते। सप्तमे साम्नि तिस्रोजगत्योऽग्निष्टोमस्तोत्रे

---

* प्रमाणाभावान्तरेऽपि इति पाठान्तरं।

च प्रग्रथनपूर्व्वकाभ्यासे सप्तबृहत्यश्चतुर्द्दश ककुभः । तत्र सप्त बृहत्यः पञ्च जगत्यः द्वादशाक्षराणि प्रवशिष्यन्ते । चतुर्द्दशानाञ्च ककुभां अष्टौ जगत्यः । अष्टौ* अष्टाक्षराण्येव अवशिष्यन्ते † तदेव चतुर्विंशति जगत्योऽवशिष्टाक्षरैश्च मिलितैरेका ककुप् ।

तदिदं प्रग्रथनएवोपपद्यते, नतु यथाश्रुतगायत्रीपाठे अल्पा-क्षरत्वापत्तेः । तस्मादपि प्रग्रथनम् ।

यत्तु भाष्यकारेण पूर्व्ववदन्ययोर्वाऽनुष्टुभोः समानयनं प्रग्रथनं वा इति चिन्तितम् । तत् पौनरुक्त्यापत्तेरुपेक्षितं ।

यद्यपि तन्त्ररत्नादौ लिङ्गान्तरप्रदर्शनार्थं वर्णकान्तरमित्युक्तं तदपि भाष्योक्तविचारे लिङ्गानुपपत्तेः पूर्व्ववर्णक एव प्रदर्शितत्वाद-युक्तम् । ८ । २ । ६ ।

एवं वा ॥ गवामनयने एकषष्ट्यधिकशतत्रयसुत्यात्मके अशीति-शतं पूर्व्वः‡ पक्षः तथोत्तरं मध्ये विषुवान् । तत्र पूर्व्वस्मिन् पक्षेऽग्निष्टोमीयं प्रथममहः चतुर्व्विंशं द्वितीयं चत्वारोऽभिप्लवाः षड्हा एकः षष्ठः षड्हः समासः सद्वितीयः सतृतीयः सचतुर्थः सपञ्चमः त्रयोभिप्लवा एकाहः त्रयः स्वरसामानः इत्यष्टाविंशतिरहानि आद्याभ्यामहोभ्यां सह षड्मासाः गवामयनप्रकरणे ब्रह्मसामस्तोत्रा-वान्तरप्रकरणे च चतुःशतमेन्द्रावोहताः प्रगाथाः इतिश्रुतं । तत्र-तिष्ठसु ऋक्षु अत्रनं उत द्वयोः प्रग्रथनेन इति चिन्तायां प्रागाथस्मरणात्

---

* क्वचित् पुस्तके अष्टौ इति न दृश्यते ।

† अष्टाक्षराण्येव शिष्यन्ते इति क्वचित् पाठः ।

‡ पूर्व्वं इति पाठान्तरम् ।

प्रग्रथनेन इति सिद्धान्तः। प्रग्रथनं च रौरवादिवद्द्विराहृत्या बोध्यम्। एवञ्च पञ्चसु मासु वार्हताः प्रगाथा आप्यन्ते इति लिङ्गमुपपद्यते।

यथाहि सत्यपि ब्रह्मसामस्तोत्रावान्तरप्रकरणे त्रयः प्रगाथा न ब्राह्मणाच्छंसिस्तोत्रा अपितु बृहद्रथन्तरकालेयस्तोत्रीया इन्द्रक्रतु-स्थान्यवस्थाना इति वाक्यादवान्तरप्रकरणं बाधित्वा ज्योतिष्टोमात्मक-प्रथमदिनस्थस्तोत्रान्तरेष्वेव निविशन्ते भाष्यकारलिखनात्।

छन्दोगसूत्रानुसारात्तु चतुर्विंशतिस्तोमक द्वितीयदिनस्य स्तोत्रा-न्तरेष्वेव। तत्राऽपि पवमाने रथन्तरस्य प्रागाथः। होतु. पृष्ठे बृहतः। अच्छावाकस्य पृष्ठे कालेयस्येत्येवं बोध्यम्।

एवमुक्तवचनादेव इन्द्रक्रतुप्रागाथेऽपि उत्तरस्मिन् सर्व्वस्मिन् पक्षेऽपि एतस्य ब्रह्मसामस्तोत्रत्वेऽपि तत्राभीवर्त्तसामाभावात् अभी-वर्त्तादन्यस्थाना इति वचनार्थो न विरुध्यते। अवशिष्टाः शतं प्रागाथास्तत्र शतस्यैको भाष्यकारलिखनात्। प्रथमदिनीयब्रह्म-सामस्तोत्रे। परन्तु भाष्यकारीयं नौधसग्रहणं नौधसस्थानक-ब्राह्मणाच्छंसिस्तोत्रोपलक्षणार्थम्।

वस्तुतस्तस्य बृहत्सामकपृष्ठवत्त्वेन श्येतस्यैव प्रसक्तौ नौधस प्रसक्त्यभावात् गवामयने अभीवर्त्तस्यैव ब्रह्मसामत्वेन विशिष्य विहितत्वाच्च। छन्दोगसूत्रानुसारात्तु द्वितीयदिनीयब्रह्मसामस्तोत्रे शतस्यैकः प्रगाथो बोध्यः। अवशिष्टा नवनवतिप्रगाथास्ते पञ्चसु-मासेषु यावन्तोऽभिस्तवा तेषां प्रतिषडहं तृतीयदिनवर्ज्जं प्रतिमासं-विंशत्यहानि पञ्चसु मासेषु शतं तेषु उत्तमवर्ज्जं नवनवतिप्रगाथा इन्द्रदैवत्याः बृहतीच्छन्दस्काश्च समाप्यन्ते। षडहतृतीयेषु उत्तमे

च सातोवार्हतानां त्वचानामाम्नानात्। अतएव तान्येकविंशति-
र्दिनानि षष्ठमासस्य चाऽऽद्यानि द्वादश इत्येवं त्रयस्त्रिंशत् सातोवार्हता
स्तृचा इति वाक्येन तेषु सतोवृहतीनां विधानं। एवञ्च पञ्चमास-
पर्य्यन्तं पृष्ठाःषड़हेषु अपि सतोवृहतीनां विधान भाष्यकारलिखना-
दवगन्तव्यम्। शेषेषु त्वहःसु विशेषवचनाभावे तिसृणां उष्णिहां
त्रिभिर्गायत्त्रोपादैः संयोगेन वृहतीत्रयसम्पादनम्। ननु क्वाऽपि
ब्रह्मसामस्तोत्रे प्रागाथः।

तदेतत् पञ्चसु माःसु वार्हताः प्रागाथा आप्यन्ते इति लिङ्गं
द्वयोः प्रग्रथने उपपद्यते ननु त्वचगाने क्रियमाणे भाष्यलिख-
नात्। अष्टोत्तरशतद्वयसंख्याकानामृचां पञ्चप्रागाथसम्पादकदर्शक्
न्यूनत्वादष्टनवत्यधिकशतावशिष्टानां षट्‌षष्टिस्तृचा भवन्ति।
तेच समाधिकेषु मासेषु समाप्येरन्।

तथा हि पूर्व्वोक्तरीत्या प्रतिमासं दशदिनानां सतोवृहतीच्छन्द-
स्कत्वाद्विंशतिर्दिनानि अवशिष्टानि तानि मासत्रयेण षष्टिः
सम्पाद्यन्ते। अवशिष्टानि षट् चतुर्थमासस्याऽभिप्लवत्वीयवर्ज्जं
उपादेयानीति सप्ताधिकेषु त्रिषुमासेषु समाप्तिःस्यात्। यदा तु
तुल्यन्यायत्वात् पञ्चस्वपि प्रागाथेषु च गानं तदा पञ्चदशानामृचां
न्यूनत्वात् अवशिष्टास्त्रिनवतिशत ऋचः, तासां त्वचास्तुःषष्टिरेकाच
ऋगिति पञ्चाधिकै स्त्रिभिर्मासैस्तृचसमाप्तावपि एका ऋगवशिष्यतें
इति तद्वैयर्थ्यञ्च। सर्व्वथालिङ्गानुपपत्तिः प्रागाथशब्दानुपपत्तिश्च।

नचैकं त्वचं पठित्वाअन्यामृचं पुनरुपादाय अशिमऋक्
प्रग्रथनमेव किं न स्यात् इति वाच्यं “अन्या अन्या ऋचोभवन्ति”

इति वचनेन तन्निरासात्। अतः पादप्रग्रथनमेवेति सिद्धं। इयञ्च लिङ्गानुपपत्तिर्भाष्यकारलिखनानुसारात् प्रकरणे एतावत् संख्याक-ऋक्पाठमङ्गीकृत्य। यदा "चतुःशतमैन्द्रावार्हताः प्रागाथा दाशतयीषु" इति कल्पसूत्रकारवचनात् दाशतयीभ्यः समानयनम्, तदा पूर्व्वपक्षिणोऽपि चतुःशत * तृचानामेव समानयनोपपत्तेः लिङ्गोपपत्तिरविकलैव इति प्रागाथपदादेव प्रग्रथनम्। ८।२।६।

अर्थैकत्वात्॥ सामवेदशाखाभेदेन एकस्यैव स्वरसमूहात्मकस्य साम्नआरोहावरोहादिभेदेन प्रकारभेदा आम्नाताः। एकस्यैव रागस्य देशभेदेन प्रकारभेदवत्। तेषाञ्च प्रकाराणां एकगीत्यर्थ-त्वात् व्रीहियवादिवद्विकल्पः सिद्धएव प्रसङ्गात् स्मार्य्यते। ८।२.७।

अर्थैकत्वात्॥ विश्वजिति विशेषे कानिचित् प्राकृतानि स्तोत्राणि विहितानि, तेषु च यूपावटस्तरणबर्हिर्न्यायेन † न प्राकृतानां रथन्त-रादिसाम्नां ऋचां वा प्राप्तिः प्राकृतस्तोत्रविशेषेष्वेव तेषां निबद्धत्वात्। तत्प्रकरणे चेदं श्रुतं "यदृचास्तुवते तदसुरा अन्ववायन् यत् साम्नास्तु-वते तदसुरा नान्ववायन् तस्माद् यएवं विद्वान् साम्ना स्तुवीत" इति।

तत्र ऋक्शब्दोऽप्रगीतऋक्परः प्रगीतायाः सामविधिनैव प्राप्तेः। नहि ऋगाश्रयत्वं विना साम्नः स्तोत्रसाधनता सम्भवति। स्तोभानामर्थशून्यत्वेन तदाश्रितानृक्साम्नां गुणाभिधानरूपस्तोत्र-साध्यत्वासंभवात्। अतस्तत्र प्रगीताप्रगीतयोर्विकल्पेन स्तोत्र-साधनता उत प्रगीताया एवेति चिन्तायाम् —

---

* चतुःशत इति पाठान्तरम्।

† बर्हिर्न्यायेन इति क्वचित् पाठ.।

अन्तिमस्य आम्नातस्य यच्छब्दोपबन्धत्वेन सामविधायकत्वा-भावाद् द्वयोरेवाऽप्राप्तार्थत्वादिना लेट्त्वनिश्चयाहक्साम्नो * रुभयो-रपि विधिः। अर्थाच्च तुल्यकार्य्यत्वविकल्पः। नचाऽसुरागमनेन ऋचो निन्दितत्वात् कथं तद्विधिः निषेधैकवाक्यतां विना निन्दात्वस्यैवाऽ प्रतीतेः। अतोऽत्यन्तदुराराध्यानां अपि ऋचा वशीकरणाद्विध्येक वाक्यतया अस्य स्तुतित्वमेव इति प्राप्ते—

वाक्यभेदविषमशिष्टविकल्पादिदोषभिया यच्छब्दोपबन्धस्याऽपि लिङ एव सामविधायकत्वं। नतु लट्त्वेन सन्दिग्धयोः। एवं च साम्न एव इयं सर्व्वा स्तुतिः। ऋङ्निन्दाऽपि "न हि निन्दा" न्यायेन विधेयसामस्तुत्यर्थं वा इति तस्याः प्रगीताया एव साधनत्वं। इदञ्चाऽधिकरणं—यत्र स्तोत्रान्तरप्रकरणे—साम तद्योनिरुत्तराश्च न पठिताः तद्विषयम्। इतरत्र साम्नां ऋचां च प्रकरणादिनैव अङ्ग-त्वोपपत्तेः सामविधिवैयर्थ्यात्।

अतएव प्रकृतोदाहरणे—साम्नेति एकवचनोपादानात् एकमेव साम सामवेदादानेयम्। ऋक् च तत्र योनिरूपैव। "एकं साम तृचे क्रियते यद्योन्यां गायति" इत्यादेर्ब्राह्मणोयावाङ्नियम-न्यायेन प्राकृततत्तत्स्तोत्रीयर्चामिवोहप्रेन अप्राकृते अप्रवृत्तेः। क्रतु-गत प्राकृतचतुःस्तोमत्वादिगुणानुरोधात् तु एकस्या एव प्रगीताया ऋचः तावद्वारमभ्यासः।

नचैवं यत्रा प्राकृतस्तोत्रावान्तरप्रकरणे योनिरुत्तरा च आम्नाता तत्रोत्तरयोः साम्नि प्रमाणाभावः। यत्र च संज्ञादिभिर्न स्तोत्रान्तर-

---

* ऋक् सामयोरिति क्वचित् पाठः।

मुपात्तं न च प्रकरणे च ऋचः पठिताः न वा प्रकृतोदाहरणवत् सामविधिः, तत्र स्तोत्रविध्यन्यथानुपपत्त्या ऋचामानयनेऽपि सामानयने प्रमाणाभावः। अथ तत्र प्रगीतमन्त्रसाध्यगुणाभिधानस्यैव स्तोत्रतया स्तोत्रविध्यन्यथानुपपत्त्यैव सामानयनं ततोऽत्रापि तत एव सामप्राप्तेः "साम्ना स्तुवीत" इति विधिवैयर्थ्यापत्तेरिति चेत्। साम्ना स्तुवीत इत्यस्य अनारभ्याऽधीतत्वेन प्रकृतावानर्थक्येनाऽनिवेशे सर्व्वत्रैव विकृतौ अप्राकृतस्तोत्रविषये सामविधायकत्वोपपत्तेः।

भाष्यकारादिलिखनसारस्यादस्य विकृतिविशेषप्रकरणे पठितत्वाङ्गीकारे तु नाऽयं वस्तुतः सामविधिरपि तु स्तोत्रपदशक्तिग्राहकयाज्ञिकप्रसिद्ध्यपोद्बलकः सन्ननुवाद एव अप्राकृतस्तोत्रविधिस्तुत्यर्थएकत्वविधानार्थो वा इति ध्येयम्। एतदस्वरसादेव वर्णकान्तरम्।—

क्वचित् कर्म्मविशेषे "अयं सहस्रमानव" इति इयं ऋक् प्रगीता अप्रगीता च पठिता। पुनश्च "अयं सहस्रमानव इत्येतया आहवनीयमुपतिष्ठते" इत्यनेन विनियुक्ता सा। द्विविधायाः पठितत्वात् द्विविधाऽपि विकल्पेन विनियुज्यते इति प्राप्ते—अप्रगीतायाः प्रगाणार्थ एव पाठः। नह्यनवधारितस्वरूपायां सुखं गानं अर्थावबोधो वा सम्भवति। प्रगीतत्वेनाऽन्यार्था प्रयोजनमपेक्षमाणा उपस्थाने विनियुज्यते इति सैव ग्राह्या। योऽपि अप्रगीताया एव शाखान्तरे पाठः, सोऽपि तत्पुरुषान् प्रति ऋक्स्वरूपज्ञानार्थ एव इति न शाखान्तरीयप्रगाणाख्यसंस्कारविरोधः। ८। २। ६।

एवं वा॥ साममन्त्रप्रसङ्गात् ऋग्यजुर्मन्त्रयोः स्वरश्चिन्त्यते। ते हि क्वचिदुदात्तानुदात्तस्वरितप्रचयरूपचातुःस्वर्य्येण अधीताः।

क्वचित् तत्र प्रचयवर्ज्जं वैस्वर्य्येण। तत्रोभयोरपि गीतिप्रकारवद् विकल्प एव।

न च "तानो यज्ञकर्म्मणि अजपन्यूङ्खसामसु" इति स्मृत्या तानस्वरस्य विहितत्वात् उभयबाध इति वाच्यं श्रौतानामध्ययन-विध्यध्यापितानां स्वराणां पाठादिना तत्तत्क्रत्वपूर्व्वसाधनीभूत-मन्त्रवृत्तित्वस्य प्रबलप्रमाणप्रमितत्वेन स्मृत्या बाधायोगात्। अन्यथा "अग्निर्मूर्द्धा" इत्यादीनां स्मृत्या नवग्रहाङ्गहोमाङ्गत्वेन विनियोगात् क्रमादिना आग्नेयाद्यङ्गत्वानापत्तेः।

नचैवं नवग्रहहोमाङ्गत्वानापत्तिः। सौर्य्याकाङ्क्षयैव नवग्रह-होमाकाङ्क्षयैव वाक्येन विनियोगोपपत्तेः। प्रकृते तु श्रौतस्वरविरो-धात् तानस्मृतेरप्रामाण्यमेव इति प्राप्ते—

श्रौतस्य स्वरस्य अध्ययनविधिना अध्यापितस्य प्रयोजनापेक्षायां "यद्यच्छक्नुयात् तत्तत् कुर्य्यात्" इत्युपबन्धेन प्रकरणादिसहकृत-मन्त्रवृत्तिपाठेन च प्रयोजनद्वयमवगम्यते। एवं तावत् प्रयोगकालात् पूर्व्वमेव अर्थविशेषनिर्णायकत्वं। न च मन्त्राणां प्रयोगकाल एव अर्थस्मारकत्वात् पूर्व्वमर्थविशेषावधारणाभावेऽपि बाधकाभावः विध्यवगतस्याऽपि अर्थविशेषस्य प्रयोगकाले मन्त्रप्रतिपाद्यत्वसन्देहे प्रयोगप्राप्तभावभङ्गापत्तेः। अतस्तदर्थं प्रयोगाद् बहिरेव मन्त्रार्थ-निर्णयार्थं—"बहुव्रीहौ प्रकृत्या पूर्व्वपदं" इत्यादिस्वरोपयोगः। अपरञ्च * पूर्व्वमवधारितस्याऽपि अर्थस्य प्रयोगमध्ये विस्मरणे

---

* अपरञ्च इति पाठान्तरं।

पुनर्निर्णायकत्वं * तस्य च कादाचित्कत्वेऽपि मन्त्रनैयत्यवदेव स्वर-नैयत्योपपत्तिः। मन्त्रोच्चारणवदेव स्वरोच्चारणसिद्धेर्न स्वरानुसन्धान-मात्रेण निर्णायकाशङ्का।

तदेवं द्विविधः स्वरस्य क्रतूपयोगः प्रकरणादिना सिध्येत्। तत्र च विशेषरूपेण स्मृत्या यज्ञप्रयोगे तानस्वरविधायिकया † बाधात् सामान्यरूपस्य प्रकरणादेः प्रयोगबहिर्भूतार्थनिर्णयोपयोगित्व-विषयतैव कल्प्यते। प्रयोगमध्ये विस्मरणादौ तु स्वरानुसन्धानेनैव ऽर्थविशेषस्मरणम्।

अत्र च तानस्य अर्थविशेषोपयोगाभावेन अदृष्टार्थत्वेऽपि एकमन्त्र-वृत्तित्वादेव त्रैस्वर्यादिबाधकता। इतरथा गुणानुरोधेन मन्त्रावृत्त्या-पत्तेः। अजपेत्यादिना तानपर्य्युदासाच्च जपादौ त्रैस्वर्यादिप्रति-प्रसवः। जपाः जपतिचोदनाचोदिता मन्त्राः न्यूङ्खाः शस्त्रेषु मन्त्र-विशेषाः। ८। २। ६।

॥ सामप्रदेशे ॥ एवं सामोहोपद्घातं सप्रसङ्गं निरूप्य अधुना सामोहो निरूप्यते। "कवतीषु रथन्तरं गायति" "यद्योन्यां गायति तदुत्तरयो"रित्यादौ यत्र सामातिदेशः तत्र साम्नः ऋगक्षराभि-व्यक्त्यर्थत्वाद् यत्र स्थाने योनौ एकाराद्यक्षरसंस्कारिका आईभावादि-रूपा गीतिः श्रुता, तत्र स्थानान्तरे यत्रैवैकारपाठ उत्तरादौ तत्रैव आईभावरूपा गीतिरूहितव्या। ननु प्रकृतस्थानपठिताक्षरान्तरे कर्त्तव्या तत्र गीतेस्तदक्षराभिव्यञ्जकत्वासम्भवेन आरादुपकारकत्व-

---

* निर्णायकता इति क्वचित् पाठः।

† स्वरविधायकया इति क्वचित् पाठः।

प्रसङ्गात्। आईभावो हि प्रकृतौ अवर्णइवर्णात्मकस्य सन्ध्यक्षरस्यैकारस्य विश्लेषरूपसंस्कारार्थः। न हि एकारो नाम वर्णान्तरं प्रमाणाभावात् अपि तु स्मृतिसहकृतप्रत्यक्षेण अवर्ण इवर्णात्मक एव। अतश्च तद्विश्लेषकस्य आईभावस्य तत्स्थानपठिताक्षरान्तरविश्लेषकत्वासम्भवाद् यदैवोत्तराद्वाविकारः तदैव आईभावः कार्य्यः।

यद्यपि च अयं विश्लेषादिरूपः संस्कारो नाऽर्थाभिधानोपयोगितया दृष्टार्थस्तद्व्यतिरेकेणैव सन्ध्यक्षरेणाऽर्थाभिधानस्य जायमानत्वात्। तथाऽपि गानसंस्कृतमन्त्रजन्यगुणाभिमव्यक्तेरेव स्तोत्रतया स्तोत्रत्वसिद्ध्यर्थतयैवोपयुज्यते।

नचैवं न विश्लेषादिरूप एव संस्कारः प्रमाणाभावात् अननुगमाच्च। न हि विश्लेष एव सर्व्वत्र संस्कारः "एइ ऐई इत्येतानि तालव्य"मिति स्मृत्या इईकारयोरपि तालव्यत्वात् "तालव्यमाई यद्वृद्धि"मिति स्मृत्या च तत्राऽपि आईभावविधानेन तत्र सन्ध्यक्षरत्वाभावेन विश्लेषासम्भवात्। अतः सर्व्वानुगता वर्णान्तरागमेन पूर्व्वाक्षरपरिलोप एव संस्कारः स्तोत्रत्वघटकः। तस्य च एकारस्थाने स्थितवर्णान्तरेऽपि सम्भवात् नोह्यसिद्धिरिति वाच्यम्। तथात्वेऽपि संस्कार्य्यतावच्छेदकस्यैकारत्वस्य अक्षरान्तरेष्वभावेन ऊह्योपपत्तेः।

वस्तुतस्तु परिलोपाख्यसंस्काराङ्गीकारे श्रुतस्य वर्णस्य स्तोत्रसाधनत्वानापत्तेर्लोपस्य क्वाऽपि संस्कारत्वादर्शनाच्च विश्लेषादिरेव सामगप्रसिद्धोऽननुगतोऽपि संस्कार इति सिद्ध ऊहः।

एवञ्च प्रधानभूतात्तरादिऋगक्षरानुरोधेन यत्र ऋगक्षराल्पत्वं

तत्रावशिष्टगीते र्लोपो यत्र वा ऋगक्षराधिक्यं तत्र गीतिविशेषस्यापत्तिरित्याद्यापद्यमानमपि न दुष्यति। ९। २। ७।

॥ स्तोभस्यैके ॥ साम्नः कश्चिदंशऋगक्षराधिरूढः कश्चिच्च स्तोभाक्षराधिरूढः। प्रजापतिहृदयादौ स्तोभाक्षराधिरूढ एव। तत्र सामातिदेशे स्तोभानामप्यतिदेशो भवेन्नवेति चिन्तायां साम्न ऋगक्षराभिव्यक्त्यर्थत्ववत् स्तोभाक्षराभिव्यक्त्यर्थत्वस्य तुल्यत्वाद् गुणानुरोधेन प्रधानभूतानां ऋचामिव स्तोभानामपि नाऽतिदेशः। न च स्तोभानां प्रायशोऽनर्थकत्वात् स्तोत्रसाधनत्वासम्भवेन निष्प्रयोजनानां प्राधान्यानुपपत्तेर्गीतिकालपरिच्छेदकत्वेन गीत्यङ्गत्वात्तदतिदेशे अतिदेशोपपत्तिरिति वाच्यं। अग्निष्टपतीत्यादिभाष्यकारोक्तस्तोभाक्षराणां ऋगेकवाक्यत्वासम्भवेऽपि स्वातन्त्र्येणैव गुणाभिधानरूपस्तोत्रकरणत्वसम्भवेन ऋक्त्वादेवप्राधान्योपपत्तेः येषामपि हुं फड़ादि स्तोभाक्षराणामर्थशून्यत्वं तत्राऽपि तदुच्चारणस्यादृष्टद्वारानुष्ठानसादेश्यात् प्रधानऋगङ्गत्वं प्रकरणादिना स्तोत्राङ्गत्वमेव वेति न सामाङ्गत्वकल्पनावसरः। नच साम्नोवादृष्टार्थत्वं स्तोभानां वेत्यत्र नियामकाभावः। साम्नोऽंशे अदृष्टार्थत्वमंशे चदृष्टार्थत्वमित्येवंविधवैरूप्यापत्तेरेव नियामकत्वादिति प्राप्ते यज्ञायज्ञीयेन स्तुवीतेत्यादौ तत्र तत्र साम्नां सामान्यतो विशेषतश्च विनियोगस्यैव नियामकत्वेन सामोच्चारणस्यैव तदंशेऽदृष्टार्थत्वं स्तोभानां त्वर्थशून्यानां गीतिकालपरिच्छेदकत्वेन दृष्टार्थत्वमेव अन्यथा हि साम्नःप्रकरणादिनैव सर्व्वस्याऽपि विवक्षितार्थत्वलाभे विनियोगविधिवैयर्थ्यापत्तिः। अतो विनियोगवशेन झटितिप्रयोजनलाभे द्वारभूतादृष्टस्याऽपि तत्रैव

झटितिकल्पना न तु स्तोभेषु स्तोत्रादिरूपद्वारिसम्बन्धकल्पनसापेक्ष-त्वात्। अत: स्तोभानां गीत्यङ्गत्वात्तदतिदेशेनाऽतिदेशोपपत्तेर्न तदंशस्य लोपाख्योन्यथाभाव:। अर्थवत्स्तोभाक्षरेषु तु ऋगक्षर-वदेव स्तोत्राद्युपयोगोपपत्तेर्गीतिरेव तदङ्गत्वमिति तु प्रतिभाति। अतएवाऽनर्थकस्तोभेषु ऋक्सत्त्वे साम्न आश्रयिकर्मत्वं तदभावे तु शुद्धादृष्टार्थत्वमेव। ६। २। ७।

॥ अधिकं ॥ प्रसङ्गात् स्तोभलक्षणमुच्यते। ये ऋगक्षरेभ्य ऋगर्थाभिधानोपयोगिभ्योऽधिका ऋगक्षरविलक्षणावर्णास्ते स्तोभा:। अत्र ऋगक्षरेभ्योऽधिकत्वेऽपि वाग्निर्वाग्निरित्यभ्यासे ऋगक्षरविल-क्षणत्वाभावादन्त्यं विशेषणम्. अग्नाईत्यादिविकारे ऋगक्षरविल-क्षणत्वेऽपि आधिक्याभावादाद्यं। वस्तुतस्तुविलक्षणत्वस्यार्थानभिधाय-कत्वरूपत्वे अर्थाभिधायकेषु अग्निष्टपतीत्यादि स्तोभेष्वव्याप्तेरन्यस्य च विलक्षणत्वस्य निर्वक्तुमशक्यत्वाद्यत्राभियुक्तानां स्तोभ इति प्रसिद्धिस्ते स्तोभा:। स्तोभत्वञ्च मन्त्रत्वादिवदेवाखण्डोपाधिरिति न शक्य-तावच्छेदकाप्रसिद्धि:। अत्र च येऽर्थवन्त:स्तोभास्तेषां ऋङ्मन्त्र-वदेवगुणिनिष्ठगुणाभिधानजनकत्वादेव प्रामाण्यं गुणाभिधानस्य चाऽदृष्टार्थत्वेऽपि ज्ञानस्य स्वत:प्रमाणत्वाद्दोषाभावेन चाऽप्राप्त्यायोगा-द्विषयसिद्ध: प्रमात्वाविघातो ऋग्वदेवनाऽनुपपन्न:। यदि तु देवता-विग्रहादिप्रसङ्गभिया तात्पर्य्यविषयीभूतस्यैवाऽर्थस्य सिद्धि:। प्रकृते तु अदृष्टाङ्गं गुणाभिधानस्य अदृष्टार्थत्वान्न तात्पर्य्यकल्पना। अपि तु आद्यार्थ्यज्ञानजनकत्वमेव। तदाऽस्तु पदार्थविषया प्रामाण्यं अनर्थकस्तोभाक्षरवत्। अथवा सर्व्वत्रैवमादिस्थले प्रामाण्याभावेऽपि

प्रयोजनवत्त्वमात्रेण स्वाध्यायविधेरुपयोगः । नहि वेदत्वावच्छेदेन प्रामाण्यमिति राजाज्ञा वेदोऽखिलो धर्म्ममूलमिति मूलपदस्य जनकत्वज्ञापकत्वोभयसाधारण्येनाऽप्युपपत्तेः । ८ । २ । ८ ।

॥ धर्म्मस्य ॥ तदेवं त्रिविधस्याऽप्यूहस्य प्राकृतदेवतादिस्थानापन्न एव वैकृतदेवतादौ प्रसक्तेः स्थानापत्तिरिदानीं निरूप्यते । तत्र मूले तत्कार्य्यकारित्वरूपां स्थानापत्तिमङ्गीकृत्य तस्याः पञ्चविधत्वमुक्तं । यद्यपि च सर्व्वत्र विधिरेव स्थानापत्तौ वीजं । तथाऽपि तत्सहकारीणि पञ्चेति पञ्चविधत्वं प्रत्यक्षादनुमानाच्छ्रुतस्वशब्दात् प्रतिषेधानुमितस्वशब्दादभावे विध्यनुमितप्रतिषेधकल्पितस्वशब्दादिति । तेषाञ्चोदाहरणानि नैवारश्चरुरिति नीवाराणां व्रीहिकार्य्यकारित्वं प्रत्यक्षात् । न च नैवार इति विकाराद्यर्थतद्धितरूपस्वशब्दादेवतदिति शङ्क्यं तस्य सम्बन्धसामान्यवाचित्वेनाऽप्युपपत्तौ चरौ नीवारविकृतित्वस्य प्रत्यक्षाधीनत्वात् । तथा नखावपूतश्चरुर्भवतीत्यत्र नखानामुलूखलमुषलस्थानापन्नत्वमनुमानात् नखानां हि अवपवनमेव प्रत्यक्षेण कार्य्यमवधार्य्यते । उलूखलमुसलयोश्चावघातः । अवपवनावघातयोश्चैकवितुषीभावकार्य्यत्वात्तत्साधनयोरपि एकवितुषीभावप्रयोजकत्वमनुमेयमेव । तथा पाशुकचातुर्म्मास्येषु "परिधौ पशुं नियुञ्जीते"ति श्रुतस्य परिधेर्यूपकार्य्यकारित्वं श्रुतस्वशब्दादेव नह्यन्यथा प्राकृतनियोजनान्तरविधिर्विशिष्टविध्यादिगौरवापत्तेः । तथा न गिरागिरेति निषेधानुवादबलाद्गिरापदकार्य्यवाचि स्वशब्दानुमानेनेरापदस्य गिरापदस्थानापन्नत्वं तथा संस्थिते षड़हेमध्वाशयेऽपृतं वेत्यत्रषड़हाभावे मध्वशनविधिना षड़हप्रतिषेधमनुमाय तेन षड़ह-

वाचिस्वशब्दानुमानेन षड़हस्थानापन्नत्वं मध्वशनादेः। इदञ्च भाष्यकारोक्तमपि कृत्वाचिन्तयोदाहृतमिति मन्तव्यं। षड़हसमाप्युत्तरं तदङ्गत्वेनाऽत्र मध्वशनविधानेन षड़हाभावे मध्वशनविधौ प्रमाणाभावात् स्थिरोदाहरणान्तरं तु मृग्यमित्युक्तं मम प्रतिभाति। न तावत्तत्कार्य्यकारित्वं तत्स्थानापन्नत्वं ब्रह्मवर्चसादिफलस्य सौर्य्यादिकरणस्य च स्वर्गाग्नेयादिकार्य्यकारित्वाभावेन स्थानापत्त्यनापत्तेः। नचेष्टापत्तिः। "अगन्मसुववि"त्यादौ यागानुमन्त्रणादौ चोहानापत्तेः। "सूर्य्यस्याऽहं देवयज्यये"त्यादियागानुमन्त्रणे यज्यापदे पदान्तरप्रक्षेपरूपभाक्तोहाभावेऽपि यागान्तरपरत्वेन अन्वयाभावात्मकस्य मुख्यस्योहस्य तादवस्थ्यात्। चरुनीवारनखादीनामवान्तरकार्य्यभेदेन स्थानापत्त्यनापत्तेश्च, तथोदाहरणान्यप्ययुक्तानि। तथा हि नीवाराणां चरुविशेषजनकत्वस्याऽन्वयव्यतिरेकाभ्यामनुमेयत्वेन प्रत्यक्षाविषयत्वात्। न हि साधनसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकत्वादिरूपप्रत्यक्षायोग्यपदार्थघटितव्याप्तिघटितजनकत्वस्य लौकिकप्रत्यक्षं सम्भवति। अलौकिकप्रत्यक्षं नखादिष्वपि तुल्यं। किञ्चैवं नखेष्वपि उलूखलमुसलप्रयोज्यवितुषीभावप्रयोजकत्वस्य प्रत्यक्षत्वापत्तिः।

तृतीयोदाहरणेऽपि यद्यपि परिधिः पशुनियोजनसाधनत्वं श्रुतं, तथाऽपि नियोजनस्य यूपायत्वं न श्रुतमिति न यूपकार्य्यकारित्वस्य श्रुतस्वशब्दगम्यता।

चतुर्थे तु गिरापदस्याऽग्निष्टोमस्तोत्रसाधनत्वाभावेन तत्कार्य्यस्यैवाऽप्रसक्तेरर्थाभिधानमात्ररूपकार्य्यस्य च गोत्वादिधर्म्मग्राहकत्वा-

भावात् सत्यपि तन्निवर्त्तकत्वे द्वारापदस्य नैव तत्कार्य्यापत्ति-रित्युक्तमेव ।

पञ्चमेऽपि सत्यामपि षड्हादिकार्य्यापत्तौ अभावे विधिनैवा-ऽग्नत्वादिना तदकरणे स्वशब्दमात्रकल्पनया तत्कार्य्ये मध्वशना-दिविध्युपपत्तेः प्रतिषेधानुमानवैयर्थ्यम् । अतो मूलोक्तप्रकारानु-पपत्तेरेवं वाच्यम् । यस्य पदार्थस्य येन रूपेण यादृशपदाकाङ्क्षा-पूरकत्वं तेनैव रूपेण तस्यास्तत्सदृशाया वा भावनायास्तादृशा-काङ्क्षापूरकत्वं यस्य पदार्थस्य, तस्य तत्पदार्थस्थानापन्नत्वं । अस्ति चेदं ब्रह्मवर्चसादौ । स्वर्गादेर्हि येन रूपेण भाव्यत्व-करणत्वादिना किमस्य भाव्यं करणं वेत्यादिभावनाकाङ्क्षापूरकत्वं प्रकृतौ तेनैव रूपेण तद्भावनासदृशायां सौर्य्यादिभावनायां ब्रह्म-वर्चसादेस्तादृशाकाङ्क्षापूरकत्वात् स्वर्गादिस्थानापन्नत्वसिद्धिः ।

सौर्य्यस्य चाऽग्नेयस्थानापन्नत्वं नीवारनखादीनाञ्च किमस्य प्रदेय-प्रकृतिद्रव्यवैतुष्यसाधनीभूतक्रियासाधनत्वञ्चेत्येवमाद्याकाङ्क्षापूर-कत्वं तेन तेन रूपेण व्रीहिमुसलादिवदेव समानमिति तत्स्थाना-पन्नत्वसिद्धिः । षड्हस्य च येन रूपेण यस्यामेव भावनायां यादृशा-काङ्क्षापूरकत्वं तस्यामेव तेन मध्वशनस्येति तस्याऽपि तत्स्थानापत्तिः कृत्वाचिन्तया न विरुध्यते ।

ईदृशस्थानापत्तिघटकञ्च भाव्यत्वादिकं रूपं पञ्चधाऽवगम्यते । क्वचिदनुमानात्, क्वचिच्छ्रुतस्वशब्दात्, क्वचिल्लाक्षणिकात्, क्वचित् प्रतिषेधानुमितात्, क्वचिदभावेविध्यनुमितात् । तत्राद्योदाहरणं नीवाराः । अनुमानप्रकारश्च नीवाराः प्रदेयचरुप्रकृतिभूताः

चर्व्वान्वयव्यतिरेकानुविधायकान्वयव्यतिरेकवत्त्वे सति समवायित्वात् सामान्यमुखव्याप्त्या मृत्पिण्डवदिति न खेष्वपि चैवमेवाऽनुमानप्रकारो बोध्यः। नखा वैतुष्यप्रयोजकाः वैतुष्यान्वयव्यतिरेकानुविधायकान्वयव्यतिरेकवत्त्वात्। कुलालपिष्टदण्डादिवदिति। द्वितीयोदाहरणन्तु परिधिरेवायूपीयत्वस्य शब्दगम्यत्वाभावेऽपि परिधिजन्यत्वस्य तद्गम्यत्वात्। तृतीयोदाहरणं शरमयं वर्हिरित्यत्र वर्हिःपदेन तत्कार्य्यलक्षणाच्छराणां वर्हिःस्थानापन्नत्वम्। चतुर्थोदाहरणं "वृधन्वत्सोमस्तय" इत्यादि ऋचां प्रकृतौ वहिष्पवमानस्तोत्रकृमकार्य्याणां उपहव्याख्यविकृतौ अतिदेशेन प्राप्तौ "न सोमेति ब्रूयादिन्द्र इति ब्रूयादि"ति निषेधानुवादबलेनेन्द्रपदस्य सोमपदस्थानापन्नत्वं एवं "न मित्रस्येति ब्रूयाद्ब्रह्मस्येति ब्रूयादि"त्याद्यपि वैकृतमुदाहर्त्तव्यं। पञ्चमं तु निषेधकल्पनाभावेऽपि कृत्वाचिन्तया तदेव! स्थिरोदाहरणन्तु "यदि सत्राय दीक्षितानां साऽपुरात्तिष्ठासेत् सोममपभज्य विश्वजिता यजेत। यः सत्रायाऽऽगुरेत स विश्वजिता यजेतेत्यादौ सामान्यभावे वैश्वानर्य्येष्ट्यादौ बोध्यं। अत्र च स्थानापत्तिसत्त्वेऽपि न सत्रादिधर्म्मप्राप्तिः। अङ्गापेक्षायामङ्गघटितसादृश्यस्यैव पुरःस्फूर्त्तिकत्वेन स्थानापत्त्यतिदेशापेक्षया चोदनालिङ्गातिदेशस्य बलवत्त्वात्। ९। २। ९।

॥ तदुत्पत्तेः॥ परिधौ पुनराक्षिप्य समाधीयते न परिधेर्यूपस्थानापन्नत्वं "परिधौ पशुं नियुञ्जीते"त्यत्र परिधेर्नियोजनानुवादेन विधावतिप्रसङ्गापत्तेः। पशुनियोजनानुवादेन विधौ विशिष्टोद्देशापत्तेर्नियोजनान्तरस्यैवाऽप्राकृतस्य विधेयत्वात्। अस्तु वा स्थाना-

पत्तिस्तथाऽपि न परिधौ यूपधर्म्माः। सत्यपि परिधेः पशुनियोजनं प्रति सम्बन्धाऽङ्गत्वे पुरोडाशकपालन्यायेनाऽग्निपरिधानप्रयुक्तस्यैव परिधेः पशुनियोजनशेषत्वेन तत्प्रयुक्तत्वाभावाद्धर्म्माणाञ्चाऽपूर्व्वीय-पशुनियोजनप्रयुक्ताधिकरणार्थत्वेन तदप्रयुक्ताधिकरणे परिधावसम्भ-वात्। न च गौरवेण प्रयुक्तत्वस्य नोद्देश्यतावच्छेदककोटिप्रवेशः। शेषत्वसाधनत्वसम्बन्धित्वाद्यपेक्षया प्रयुक्तत्वस्याऽपि तदघटितत्वेन लघुत्वात्।

किञ्च। अदृष्टघटिते यूपस्वरूपे वैयर्थ्याभावाद्धर्म्माणां छेदना-दीनां युगोत्पत्त्यर्थत्वमेव नत्वपूर्व्वीयसाधनविशेषार्थत्वमाधानवत्। न च परिधौ यूपत्वमस्ति। तद्धि दृष्टादृष्टसंस्कारसमुदायो वा स्यात्तावत् संस्कारजन्यादृष्टान्तरं वा तद्विशिष्टं काष्ठं वा। सर्व्वथा परिधौ न तत्सम्भवः। परिधानप्रयुक्तधर्म्माणामपि सत्वक्त्वादीनां तत्राऽवश्यकत्वस्य वक्ष्यमाणत्वेन जोषणादीनां यूपधर्म्माणां बाधावश्यं भावेन तावत् संस्कारसमुदायासम्भवात्। नहि यूपशब्दःप्रत्येकमेकैक-संस्कारवाची अनेकशक्तिकल्पनापत्तेः। कतिपयसंस्कारयुक्ते यूप-शब्दप्रयोगाभावाच्च। यूपं छिनत्तीत्यादेस्तत्तत्संस्कारेण यूपंसम्पा-दयेदित्यर्थाङ्गीकारेण समुदायादिवाचित्वेऽप्युपपत्तेः। अन्यथा एकैकसंस्कारस्याऽपि यूपत्वे तज्जनकच्छेदनादीनां विकल्पापत्तेः। अतोयूपोत्पादकानां धर्म्माणामर्थलोपादेव परिधावसम्भव इति प्राप्ते न तावत् स्थानोपपत्त्यसम्भवः। सत्यपि नियोजनान्तरविधौ प्राकाशाध्वर्य्युदानवत् प्राकृतनियोजनकार्य्ये एव तद्विधानेन तदुपपत्तेः।

वस्तुतस्तु यावदतिदेशेन प्राप्यते तावत् पूर्व्वमेव परिधिविशिष्टप्राकृतनियोजनस्यैव परिधिप्राप्तिफलकतया पशूद्देशेन विधानोपपत्तेः स्थानापत्त्यविरोधः। न च धर्म्मासम्भवः। उद्देश्यस्वरूपे ऽानर्थक्यप्रसक्तौ शास्त्रस्य महाविषयत्वसिद्ध्यर्थं ऽपूर्व्वसम्बन्धित्वस्यैवोद्देश्यताघटकत्वात् सम्बन्धित्वञ्च सम्बन्धाविति प्रतीतिसाक्षिकः सकलतत्तत्सम्बन्धित्वव्यापकोऽखण्डोपाधिरूपो धर्म्मः। तेन तत्तत्सम्बन्धान्यतरत्वरूपतया सम्बन्धित्वस्य न गुरुभूतत्वशङ्का। वक्ष्यते चैतदग्नेत्यादिमन्त्रस्याऽपूर्व्वार्थमुत्तराधिकरणे।

यत्तु च्छेदनादीनां यूपोत्पादकतया नाऽयूपे परिधौ धर्म्मप्राप्तिरिति, तत्र पार्थसारथिः। तदुक्तरीत्यैव यूपशब्दस्य दृष्टादृष्टसंस्कारसमुदाये शक्तिः। नतु तावत् संस्कारजन्यादृष्टान्तरे प्रमाणाभावात्। तावत्संस्काराणामेव च नियोजनाङ्गत्वम्। अतश्च परिधिखलेवाल्यादौ कतिपयधर्म्मबाधेऽपि धर्म्मान्तरकरणं नाऽनुपपन्नमिति। तन्न। समुदायस्यातिरिक्तत्वे तस्यैव नियोजनाङ्गत्वापत्तेः संस्काराणां समुदायोत्पादकत्वापत्तौ परिध्यादौ तदभावेन धर्म्मप्राप्त्यनापत्तेः। अनतिरिक्तत्वे शक्यतावच्छेदकभेदेनानेकशक्तितादवस्थ्यात्। इतरथा लक्षणोच्छेदापत्तेः। अतो लाघवादाहवनीदिपदवदेवादृष्टान्तरे तद्विशिष्टकाष्ठ एव वा यूपपदस्य शक्तिः। तच्चादृष्टं नोच्छ्रयणाञ्जनादिमन्त्रसंस्कारजन्यं अपि तु यूपाहुत्याद्यङ्गकच्छेदनजोषणाष्टास्रीकरणजन्यमेव। अतएव याज्ञिकानां दीक्षाकाले तावतामेवाऽपकर्षः। युक्तञ्चैतत् "दीक्षासु यूपं च्छिनत्ती"त्यत्र यूपोत्पत्त्यनुवादेनेव दीक्षाकालविधानात्। इतरथा यूपच्छेदनो-

देशेन तद्विधाने वाक्यभेदात् । उच्छ्रयणादीनान्तु अग्निसम्मार्गन्याये-नोत्पन्नयूपसंस्कारकत्वादपूर्व्वसाधनीभूत-पशुनियोजनाधारत्वलक्षणा-वस्थाभावेनायूपे परिध्यादावपि प्राप्त्युपपत्तिः । उच्छ्रयणमात्रं पर-मर्थलोपादिना निवर्त्तते । नचैवं "यूपायाऽज्यमानाये"तिमन्त्रे ऊहा-पत्तिः । भवन्मतेऽपि समानत्वात् । परिधये अज्यमानायेत्याद्यूह-स्येष्टापत्त्यैव सुपरिहरत्वाच्च । सूत्रस्य चोहपरत्वेनाऽपि व्याख्यान-सम्भवात् । ८ । २ । १० ।

॥ परार्थे ॥ अभ्युदितेष्टौ दधिशृतयोः प्रदानार्थत्वात् प्रदेयधर्म्मा-स्तावद्दोहादयो भवन्त्येव । तण्डुलश्रपणसाधनत्वस्याऽपि तु सहश्रप-यतीति विधिबलेनार्थसिद्धत्वादसत्यपि तत्प्रयुक्तत्वे तच्छेषत्वे वा साधनत्वसम्बन्धेनापूर्व्वसम्बन्धिश्रपणसम्बन्धित्वस्य सत्त्वाद्दधिशृतयोः प्रणीता धर्म्मा अपि उत्पवनप्रणयनादयो भवन्ति न हि धर्म्मसम्बन्धे उद्देश्यस्याऽपूर्व्वशेषत्वमपि प्रयोजकं गौरवात् अपि तु शास्त्रस्य मन्त्रा-विषयत्वसिद्धौ अपूर्व्वसम्बन्धित्वमेव । अतएवाऽगमेत्यादिमन्त्रस्याऽप्य-पूर्व्वसाध्यफलार्थत्वं स च सम्बन्धःप्रकृते श्रपणसाधनताख्यः समस्त्येव ।

ननु दधिशृतयोस्तण्डुलश्रपणसाधनत्वेऽपि न प्रणीताधर्म्मप्राप्तिः । प्रणीतानां हि संयवनार्थत्वेन विनियोगात् । प्रकृते च संयवना-भावेन तदनुपपत्तेः । अतएव सौर्य्यादिचरुष्वपि वह्निरूपणापाका-भावात् कपालतद्धर्म्मनिवृत्तिवत् संयवनाभावात् प्रणीतातद्धर्म्म-निवृत्तिरेवेति चेत् । प्रणीतानां वाक्येन पिण्डसंयवनसाधनत्वा-वगमेऽपि आनुषङ्गिकहविःपाकसाधनत्वस्यापि सत्त्वात् सौर्य्यादि चरौ प्रकृते च प्रणीताधर्म्मोपपत्तेः । क्त्वाचिन्तया वाऽयं विचारः । इयञ्च

प्रणीताधर्म्मप्राप्तिः सत्यप्यकर्म्मान्तरत्वेदधिशृतयोराग्नेयहविः श्रवण-साधनत्वस्य नैमित्तिकसहश्रपणप्रयुक्तत्वे नैमित्तिकतुल्यत्वात् फलचम-सन्यायेन स्यान।पत्तेरेव नतु व्रीहियवन्यायेनेति ध्येयम्। ६।२।११।

॥ एकार्थत्वे ॥ ज्योतिष्टोमे"पृष्ठैः स्तुवत" इत्यनेन षट्पृष्ठस्तोत्राणि विहितानि। तत्र बृहद्रथन्तरसामसाध्ययोर्बृहद्वा रथन्तरं वा पृष्ठं भवतीति वचनाद्विकल्पः। तथा नोधसश्यैतसाध्ययोरपि। तथा च नियतानि चत्वारीत्यादि चित्राधिकरणे कौस्तुभे स्पष्टं। तत्र च रथ-न्तरपुरस्कारेण केचिद्धर्म्मा विहिताः। रथन्तरे प्रस्तूयमाने सम्मीले-नोच्चैर्गेयमित्यादयः। केचित्तु बृहत्पुरस्कारेण बृहति प्रस्तूयमाने समुद्रं मनसाध्यायेदुच्चै र्गेयमित्याद्याः। अत्रोभयत्रापि साम्नःशेषित्व-मेव नतु निमित्तत्वं उच्चैस्त्वादिप्रायपाठात्। ते किमुभयत्राऽपि सङ्कीर्णा उत व्यवस्थिता इति चिन्तायां सत्यपि स्तोत्रभेदे तज्जन्या-दृष्टस्य लाघवादेकजातीयस्यैव कल्पनादेकापूर्व्वसाधनोभूतार्थत्वेन धर्म्माणामवघातादिवत् सङ्करः। नह्यनयोः प्रयाजानुयाजवत् समु-च्चयो येनाऽदृष्टवैजात्यमावश्यकं स्यात्। अतएव विकल्पवचनस्याऽपि अदृष्टत्वे एव तात्पर्य्यमित्यपि सुवचं। अनयाऽपूर्व्वस्यैकत्वात्तत्त् स्तोत्रसाम्नोश्च स्वरूपेण प्रवेशाद्युक्तो धर्म्मसङ्करः। अतएव रथन्तरस्य-"अभित्वाशूरे"त्यस्यामच्युतपदत्वेन शूरादिप्रकारस्य "बृहतस्त्वा-मिद्धिहवामह" इत्यस्यामुत्पन्नत्वेन आवाहनादिप्रकारस्य च भेदेपि न प्रवेशः। अस्य ऋक्साधनताप्रकारत्वेन सामसाधनताघटकत्वा-भावाच्च न हि ऋगर्थभेदेऽपि साम्नोऽक्षराभिव्यञ्जकता भिद्यते कण्व-रथन्तरे प्रकारद्वयस्याऽप्यभावेन धर्म्मप्राप्त्यनापत्तेश्च। अतएव केषुचि-

धर्म्मेषु रथन्तरोपादानं केषुचिद्बृहत इति प्रतिनियतनिवेशाद्रथन्तरत्वादि विवक्षया धर्म्मव्यवस्थेत्यप्यपास्तम्।

नचैवमपि रथन्तरादिगीतेः ऋगक्षरवृद्ध्यंशस्य दृष्टार्थत्वेऽपि स्तोभाक्षरवृद्ध्यंशस्यादृष्टार्थत्वात्तदृष्टयोश्च गीतिभेदेन भेदात्तत्तदपूर्व्वसाधनत्वलक्षणया धर्म्माणां प्रकृतौ न साङ्कर्य्यं। कण्वरथन्तरस्य बृहद्रथन्तरस्याऽनापन्नत्वेन तद्गतस्तोभाश्रितगीत्यंशस्य प्राकृतस्तोभाश्रितगीत्यंशजन्यादृष्टार्थत्वेनैव हिरण्यगर्भमन्त्रन्यायेन कल्पनात्तत्रापि धर्म्मानुपपत्तिरिति वाच्यम्। एवमपि ऋगक्षराधिरूढ़गीत्यंश उच्चैस्त्वादिरूपधर्म्मसाङ्कर्य्यस्याऽनिवारणात्। न च तथाऽपि सामद्वयजन्यनियमादृष्टभेदात्तत्तन्नियमादृष्टसाधनत्वस्यैव च तत्तद्धर्म्मविधावुद्देश्यतावच्छेदकत्वात् कण्वरथन्तरे च हिरण्यगर्भमन्त्रन्यायेन तद्भेदाभावात् साङ्कर्य्याद्यनापत्तेरिति वाच्यम्। नियमादृष्टस्य नियमजन्यत्वेन सामजन्यत्वाभावात्। तज्जन्यत्वेऽपि वा दृष्टप्रयोजनस्यैवाऽक्षराभिव्यक्त्यादेः पुनःस्फूर्त्तिकतया साधनतद्धर्म्मप्रयोजकत्वेन नियमादृष्टस्य तत्प्रयोजकत्वाभावात् इतरथा कपालचरावपि अवघाततद्धर्म्माप्यापत्तेरितिप्राप्ते—सत्यपि स्तोत्रद्वयजन्यापूर्व्वैक्ये अवान्तरकार्य्यभेदाद्व्यवस्थासिद्धिः। तथा हि स्तोत्रत्वं तद्गताप्यवैजात्यं वा न तावत् प्रतिगुणाभिधानव्यक्तिविश्रान्तं द्वादशस्तोत्रत्वानुपपत्तेः। अपि तु तत्तत्स्तोभऋगुणाभिधानव्यक्तिषु व्यासज्यवृत्ति। तासाञ्च न यौगपद्यं क्षणिकत्वात् क्रमिकत्वाच्च। अतस्तत्तद्गुणाभिधानेभ्यः संस्काररूपाण्यदृष्टानुत्पद्यन्ते तैश्च सकलगुणसमूहालम्बनात्मिका तत्तद्विजातीयस्तोत्रत्वावच्छिन्ना अभिधानव्यक्तिरेकोत्पद्यत इति

मवश्यं वाच्यम्। तत्र च विजातीयस्तोत्रजनकतावच्छेदकतया संस्कारेष्वपि वैजात्यावश्यंभावाद्दोत्तणीयावाङ्नियमन्यायेन तत्तत्-संस्कारसमूहप्रयुक्ता एव तत्तद्धर्म्मा इति न प्रकृतौ साङ्कर्य्यम्। कण्व-रथन्तरे च हिरण्यगर्भमन्त्रन्यायेन तत्तत्संस्कारसमूहद्वयजनकतयैव ऋगन्तरजन्यसप्तदशसंख्यके गुणाभिधानव्यक्तिविधानात्तत्तत्संस्कार-प्रयुक्तधर्म्मप्राप्त्युपपत्तिरिति सर्व्वमनाकुलम्। ९। २। १२।

॥ अप्राकृते ॥ वैश्यस्तोमे "कण्वरथन्तरपृष्ठं भवती"ति श्रुतम्। तच्च प्रकृतौ बृहद्रथन्तरयोरिव पृष्ठसामाधिकरण्यात् पृष्ठपदसमानाधि-करणसामत्वसादृश्येन होतुः पृष्ठ एव निविशते, नतु मैत्रावरुणादि-पृष्ठेष्वितीति तत्रैव कौस्तुभे स्पष्टम्। अतश्च बृहद्रथरविकारत्वात्तद्धर्म्म-प्राप्तिरपि पूर्व्वाधिकरणोक्तरीत्या अविवादैव। सा च किं समुच्चये-नोभयधर्म्मप्राप्तिः उत विकल्पेनेति चिन्तायां स्तोत्रद्वयजनकविजातीय-संस्कारसमूहायाः प्रकृतौ तत्तदृक्सामादिसामग्रीभेदेन विकल्पेनोत्-पत्तावपि वैश्यस्तोमे कण्वरथन्तरतदाश्रयभूतऋगादिरूपसामग्र्यैक्ये-नैकस्मिन्नेव सप्तदशसंख्यके संस्कारसमूहे तज्जन्यगुणाभिधानसमूहा-लम्बने वा वैजात्यद्वयाभिव्यक्तौ बाधकाभावात् प्रयोजकद्वयसत्त्वे-नाऽविरुद्धसम्मीलनाद्धर्म्माणां समुच्चयोविरुद्धोच्चैस्त्वादीनां तु विकल्प इति प्राप्ते।

भाष्यकारेण तावदिष्टापत्त्यैव समाहितम्। वार्त्तिककारस्तु पृष्ठ-द्वयजन्यापूर्व्वस्यैकजातीयत्वेनाऽतिदेशेनेह प्राप्तौ तत्साधनत्वेन विकल्पे-नैव पृष्ठस्तोत्रद्वयस्य तत्साधनीभूतसंस्कारसमूहद्वयस्य च प्राप्ते-स्तादृशसाधनत्वेनैव चोपदिष्टयोः कण्वरथन्तरादिसामतदृचोर्विकल्पे-

नैव तज्जनकत्वम्। न च सामग्रीवशाद्द्वैजात्यद्वयावच्छिन्नोत्पत्तिः, निमीलनादेरपि सामग्रीत्वसम्पादकतया एकक्सामग्रमाचस्य तद- भावात्। न च सम्मीलनादेरपि समुच्चयः सम्मीलनादिसमुच्चये सामग्रीसत्त्वाद्द्वैजात्यद्वयावच्छिन्नोत्पत्तिस्तदुत्पत्तौ च प्रयोजकसत्त्वात् सम्मीलनादिसमुच्चय इति इतरेतराश्रयत्वात् एकाश्रयत्वे जातिद्वयाङ्गी- कारे साङ्कर्य्यप्रसङ्गाच्च। अतः सम्मीलनादीनामैच्छिको विकल्प एवेति।८।२।१३।

॥ उभयसाम्नि ॥ यत्र संसवगोसवश्येनादौ बृहद्रथन्तरयोः प्रकृतौ विकल्पे प्राप्ते "उभे बृहद्रथन्तरे भवत" इति श्रुतम्। तत्र यद्यपि तावदेकं पृष्ठस्तोत्रं साम्नोरेव च तस्मिन् विकल्पस्तदाऽनेन वचनेन तयोः समुच्चयमात्रविधानादेकस्मिन्नेव सप्तदशस्तोमके पृष्ठे अंशतः सामद्वयं तत्र च व्यवस्थिता एव तत्तद्धर्म्माः। यदा तु प्रकृता- वेव पृष्ठस्तोत्रद्वयं वैकल्पिकं इह च तयोरेव बृहद्रथन्तरपदलक्षितयोः समुच्चयस्तदा तत्तत्स्तोमकपृष्ठद्वयस्य प्रत्येकसप्तदशस्तोमकस्य करणा- द्धर्म्माणां व्यवस्थैव। नह्यत्रैकैककार्य्ये समुच्चितस्तोत्रद्वयविधानं येनै- कैककार्य्ये उभयविधानादुभयत्रोभयधर्म्माः स्युः। विशिष्टविधिगौर- वादप्राकृतकार्य्यतापत्तेश्च। यथावस्थितयोरेव समुच्चयमात्रविधा- नाङ्गीकरणात्। अतस्तत्तत् साम्नि तत्तद्धर्म्मा एव सम्मीलनादयः। नैमित्तिकत्वव्यवस्थतानियमस्तु सत्यपि सामद्वये तयोर्विरोधित्वाभावेन निमित्तत्वाभावान्नभवतीत्युक्तं कौस्तुभे। अत्र च पृष्ठद्वयजन्यापूर्व्वस्यैक- जातीयत्वेऽपि समुच्चयानुरोधेन व्यक्तिद्वयोत्पत्तिरिति ध्येयम्।

इदञ्च पृष्ठद्वयसमुच्चयोदाहरणं संसवगोसवादिरूपं मूले ज्ञात्वा-

चिन्तयेति द्रष्टव्यम्। वस्तुतस्तु तेषु उभे बृहद्रथन्तरे भवत इति प्रकृत्य "पवमाने रथन्तरं कुर्य्याद्बृहत् पृष्ठं भवती"ति पञ्चविंशब्राह्मणानुरोधेन लाट्यायनिकल्पे रथन्तरस्य पवमानस्तोत्रे निवेशाभिधानाच्च पृष्ठस्तोत्रे उभयोः साम्नोर्न वा एकस्मिन् क्रतावुभयोः पृष्ठस्तोत्रयोः समुच्चयः। अतएव पवमानेऽपि रथन्तरं विधीयमानं न सम्मीलनादीन् धर्म्मान् गृह्णाति रथन्तरस्य तैर्विनाऽपि जायमानत्वेन रथन्तरस्वरूपे आनर्थक्यादपूर्व्वसाधनत्वलक्षणायां पृष्ठजनकसंस्कारसमूहसाधनत्वस्यैव लक्षणीयत्वात्तदभावे यूपावटस्तरणवर्हिर्वेदप्रोक्षणकार्य्यापत्ते रथन्तरादावप्राप्तेः। अतएव यैर्विना रथन्तरमेव पठितुं न शक्यं यथा स्तोभादिभिस्तत्रेतराक्षेपकत्वे प्रमाणाभावाद्यदा तदाश्रयभूता ऋचोऽपि ऋगन्तरग्राहकप्रमाणाभावे आक्षिप्येरन्। तदा तदङ्गभूतस्तोभादीनां "प्रधानं गीयमानं हि तत्राऽङ्गान्यपकर्षती"ति न्यायेनाऽनुष्ठाने न काचित् क्षतिः। अतः क्रत्वन्तरे एतादृशवाक्यसत्त्वे स्तोत्रान्तरे विनियोगाभावे चेदमधिकरणं द्रष्टव्यम्। ९। २। १४।

॥ पार्व्वणहोमयोः॥ दर्शपूर्णमासयोः "स्रुवेण पार्व्वणौ होमौ जुहोती"ति श्रुतम् तत्र संख्याभिन्नं कर्म्मद्वयं सुश्रपर्व्वदेवताविशिष्टं विधीयते। न च हविःसमभिव्याहाराभावान्नाऽयं देवतानिर्द्देशः। सम्बन्धसामान्यवाचिन एव योग्यतया देवतात्वपरत्वोपपत्तेः। तदिदं होमद्वयं विकृतावतिदिश्यते न वेति चिन्तायां प्रयाजादिवदतिदेशः। न च पर्व्वशब्दवाच्यकर्म्मसमुदायस्यैवाऽत्रदेवताभूतस्योद्देशांशेन संस्कारात्तस्य च विकृतावभावान्नाऽतिदेशः। पर्व्वशब्दस्य काले मुख्यतया कर्म्मणि लक्षणाङ्गीकारे प्रमाणाभावात्। अतोऽत्र कालस्यैव देवता-

त्वात् तस्य चाऽसंस्कार्य्यत्वादारादुपकारकयोर्युक्त एवातिदेशः । यदि तु कालस्याऽपि कर्म्माङ्गतयोपयोगात् स्मृतिबलेन सर्व्वादौ स्मृतस्याऽपि पुनरकालकत्वसम्भावनानिमित्तकाशङ्कापरिहारार्थं कर्म्मवदेव स्मरणोपपत्तेः सामवायिकत्वलाभाय कालसंस्कारत्वमिष्येत । तथाऽपि विकृतौ तत्कालीनायामतिदेशे बाधकाभावादन्यकालीनायामपि पशुपुरोडाशादिवदूहेनाऽतिदेशोपपत्तेर्न काचित् क्षतिः । अस्तु पार्व्वणशब्दस्य पृणातेर्दानवाचित्वादधिकरणव्युत्पत्त्या कालवाचित्ववद्भावव्युत्पत्त्या कर्म्मवाचित्वस्याऽपि सम्भवात् प्रकरणात् कर्म्मपरत्वमेव । तथाऽपि पर्व्वशब्दवाच्यस्याऽऽग्नेयादिसमुदायस्य विकृतावपि देवतात्वसम्भवादारादुपकारयोरनयोरतिदेशे न किञ्चिद्बाधकम् । यदि तु सन्निपत्योपकारकत्वलाभार्थं देवतासंस्कारकत्वमिष्येत । तथाऽपि पर्व्वत्वस्य दानत्वापरपर्य्यायस्य प्रत्येकमाग्नेयादिवृत्तितया समुदायवृत्तित्वाभावादपूर्व्वसाधनरूपेणाऽऽग्नेयादीनां प्रत्येकमेवोद्देश्यत्वावगतेर्हविरभिमर्शनमन्त्रवद्विकृतावतिदेशोपपत्तिः ।

न च तत्र शब्दत एव हविषामुद्देश्यत्वावगतेरुद्देश्यसाहित्यस्य चाऽविवक्षितत्वाद्युक्तोऽतिदेशः । प्रकृते तु तद्धितशब्देन देवतात्वेन तेषामुपादानात् साहित्यविवक्षोपपत्तेः सत्यपि वैयधिकरण्येनोद्देश्यवाचकपदान्तरकल्पनयाऽऽग्नेयादीनां प्रत्येकमुद्देश्यत्वे उपादेयतादशायां विवक्षितसाहित्यानामाग्नेयादीनामेव देवतात्वावगमाद्विकृतौ च तेषामनुपयोगित्वेन संस्कार्य्यत्वानुपपत्तेर्देवतासंस्कारकयोः पार्व्वणहोमयोरनतिदेश इति वाच्यम् । उद्देशसामर्थ्यानुरोधेनाऽऽग्नेयादीनामपि अपूर्व्वसाधनत्वेनैव रूपेण देवतात्वावगतेर्विकृतावति-

देशोपपत्तेः। इतरथा स्वाहाकारपशुपुरोडाशादावपि अग्न्यग्नी-षोमत्वादिनैव देवतात्वोपपत्तेः सौर्य्यसवनीयादौ तेषामतिदेशा-नापत्तिः।

इदञ्च सर्व्वं तद्धितस्य देवताविधायकत्वमङ्गीकृत्योक्तम्। वस्तुतस्तु विशिष्टविधौ गौरवापत्तेर्हविःसमभिव्याहाराभावेन च देवतातद्धि-तत्वानिश्चयात् पर्व्वणि भवौ पर्व्वसंस्कारकौ वेत्येवमपि तद्धितोपपत्ते-र्योग्यतयाऽपि तदवधारणायोगान्नाऽत्र देवताविधिः

मन्त्रवर्णादेव तु क्रमावगताङ्गभावाद्देवताप्राप्तिसिद्धेः पार्व्वणपदं नामधेयमेव। अतएव याज्ञिकानां "ऋषभं चाऽजिनं वयं पूर्णमासं यजामहे। अमावास्या सुभगा सुशेवे"ति मन्त्रगतपूर्णमासामावास्या-शब्दयोरेव त्यागवेलायामुद्देशो न तु पर्व्वशब्दस्य। एवञ्च तन्त्रस्थपूर्ण-मासामावास्याशब्दयोः काले प्रयोगाभावाम्नायपर्य्यालोचनया कर्म्मपरत्वावगतेरेकैकस्याऽऽग्नेयादिचक्रसंस्कारकत्वेऽपि पूर्व्वोक्त रीत्या पशुपुरोडाशादिवत् सौर्य्यादावतिदेशे बाधकाभावः। न हि उद्दे-शांशस्य प्रयोजकसत्त्वे परप्रयुक्तदेवतोपजीवित्यागांशे स्वरूपेणाऽऽग्नेया-देर्देवतात्वं सम्भवति। अतो येनैव अपूर्व्वसाधनविशेषरूपेणोद्देशांशं प्रति संस्कार्य्यता, तेनैव रूपेण त्यागांशं प्रतिदेवतात्वमिति युक्त एव पशुपुरोडाशादेरिव पार्व्वणहोमयोरप्यतिदेशः। एवं वैमृधेऽपि येनैव रूपेणाऽपूर्व्वसाधनविशेषत्वादिना पौर्णमास्या उद्देश्यता, तेनैव रूपेणोत्तरकालप्रतियोगित्वं दृष्टार्थत्वान्नतु समुदिताग्नेयत्वादिरूपे णेति उद्देश्यतावच्छेदककोटौ साहित्यस्याऽऽग्नेयत्वादेश्चाऽविवक्षित-त्वाद्युक्त एव वैमृधस्याऽपि विकृतावतिदेशः। अस्तु वा तत्रोद्देश्यताव-

च्छेदककोटौ साहित्याद्यविवक्षायामपि उत्तरकालप्रतियोगित्वे उपादेयत्वाद्दर्शपूर्णमासाभ्यामिष्ट्वे”त्येव तद्विवक्षा।

अतश्च सोमे विकृत्युत्तरत्वप्रसङ्गवत् सौर्य्यादावपि पौर्णमास्युत्तरत्वाभावान्नाऽतिदेशप्रसङ्गः। अन्वारम्भणीयायां तु साहित्यादेरविवक्षा दर्शपूर्णमासस्योद्देश्यतावच्छेदककोटिप्रविष्टत्वादिति युक्तस्तस्यामतिदेशः। प्रकृते पार्व्वणहोमयोस्तु आश्रयिकर्म्मत्वेन परप्रयुक्तदेवतोपजीवित्वात् स्वरूपेणाऽऽग्नेयादीनां देवतात्वानुपपत्तेर्युक्त एवाऽतिदेशः। यत्तु समुदायापूर्व्वप्रयुक्तत्वात् पार्व्वणहोमयोर्विकृतौ च सौर्य्यादौ तदभावादनतिदेश इति। तन्न, एवमपि वैश्वदेवादिपर्व्वणे तत्सत्त्वेनाऽतिदेशापत्तेः। प्रयाजादेरपि तत्प्रयुक्तत्वेन सौर्य्यादावनतिदेशापत्तेश्च। न हि प्रयाजादीनां प्रकृतौ परमापूर्व्वप्रयुक्तत्वं द्विःकरणानापत्तेः। अपि तु समुदायापूर्व्वप्रयुक्तत्वमेव।

अथ तस्य प्रयोजकता न समुदायापूर्व्वत्वेनाऽपि तु उत्पत्त्यपूर्व्वाव्यवहितापूर्व्वत्वेनेति तेषां सौर्य्यादावतिदेशस्ततः पार्व्वणहोमयोरपि तुल्यमितिप्राप्ते। सत्यमेवं। तथाऽपि केषामपि याज्ञिकानां विकृतौ पार्व्वणहोमाननुष्ठानादाचारस्यैव प्रकृतौ साहित्यस्याग्नेयत्वादेश्चोद्देश्यतावच्छेदककोटौ विवक्षा न व्रीहित्वादिवदविवक्षेत्येवं तात्पर्य्यग्राहकत्वावसायात्तस्य च विकृतावभावादनतिदेशः पार्व्वणहोमादीनां। अतएव नाऽऽचारेण तत्तद्विकृतिपर्य्युदासरूपेणाऽनन्तश्रुतिकल्पनागौरवापत्तिः। सूत्राण्यप्याचारमेवोररीकृत्य समुदायार्थतारूपहेतुपरतया व्याख्येयानि।९।२।१४।

॥ उभयोः ॥ संख्यया कर्म्मभेदावगतेरेकवाक्योपात्तकर्म्मद्वयस्याऽपि

सन्निधानादवान्तरप्रकरणाद्वा। एकैकमन्त्रं प्रति शेषित्वावगतेः कर्म्मद्वयस्याऽपि पूर्णमासदेवताकतया तत्संस्कारकत्वम् अमावास्या-देवताकतया चाऽमावास्यासंस्कारकत्वं प्रधानद्वयानुरोधेन च मन्त्र-द्वयस्याऽपि तत्र तत्राऽऽवृत्तिः। एकपदोपादानावगतकर्म्मद्वयसाहित्य-बलाच्च सकृत् स्मृतस्याऽपि पुनःस्मरणं "ताश्चतुर्भि"रितिवन्नाऽनुपपन्नम्। न त्वत्र यथाक्रमं पाठो येनैकस्य कर्म्मण एक एव मन्त्रोऽङ्गं भवेत्। एकपदोपादानात् तु उभयोरप्युभयाङ्गत्वं अतएव नाऽत्र सूक्तवाकवि-भाग इतिप्राप्ते। "समसंख्याङ्गप्रधानविषये यथाक्रममेव सम्बन्ध" इति न्यायस्यौत्सर्गिकत्वादेकस्य प्रधानस्यैकेनैव मन्त्रेण निराकाङ्क्षत्वाच्चा-न्मृतमन्त्रावृत्तिकल्पने पुनःस्मारकाकाङ्क्षाकल्पने च प्रमाणाभावादेक-स्यैकसंस्कारार्थत्वमेवेति प्रयोजनवशाद्विभागः। ६। २। १५।

॥ प्रयाजेऽपीति चेत् ॥ समिदादीनां चतुर्णां प्रयाजानां यदि समिदादिपदैर्हितोयान्तैर्विष्णुं यजतीतिवद्देवताविधिर्यदि वा विशिष्टविधिगौरवापत्तेर्मन्त्रवर्णादेव समिदादिदेवताविधित्व-प्राप्तवाक्यस्थन्तु समिदादिपद देवतानुवादोनामधेयमेव वा, सर्व्वथा सन्निपत्योपकारकत्वलाभाय तत्तद्देवतासंस्कारार्थत्वमेव पार्व्वणहोम-स्वाहाकारोत्तमानुयाजादिवत्। न च समिदादीनामुपभोगाभावः। वेदे सर्व्वत्र समिदादिपदानामग्निसामानाधिकरण्यदर्शनेनाऽग्नये उपयोगसम्भवात् समिन्धनादस्यैव वा समिन्धनादावुपयोगसत्त्वेन तस्यैव सन्निपत्योपकारकत्वमितिप्राप्ते। सत्यपि वेदे समिदादिपदाना-मग्निपदसामानाधिकरण्ये इन्द्रमहेन्द्राधिकरणन्यायेन समिदादि-पदैस्तत्प्रकाशनानुपपत्तिः। शब्दस्य देवतात्वेन तद्भेदे पदान्तर-

प्रयोगानुपपत्तेः। न च पूर्णमासादिशब्दस्य पार्व्वणहोमयोर्देवतात्वेऽपि तदर्थस्याऽपि आग्नेयादेरङ्गांशविषयशब्दप्रतिपाद्यत्वसम्बन्धेनोद्देश-सम्बन्धित्वात् पार्व्वणहोमसंस्कार्य्यत्ववदिहाऽपि समिदादिपदस्य देवतात्वे तत्प्रतिपाद्यस्याऽग्नेःसंस्कार्य्यत्वोपपत्तिरिति वाच्यम्। तथात्वेऽपि "समिधोऽग्न आज्यस्य व्यन्तु तनूनपादग्न आज्यस्य वेत्वि"त्यादिमन्त्र-वर्णेष्वग्नेः सम्बोधनेन ततो भिन्नस्यैव समिदादिपदार्थस्य क्रियान्वय-प्रतीतेः समिदादिपदस्याऽग्निप्रतिपादकत्वाभावात् अग्निसंस्कारकत्वे पशावतिदेशानुपपत्तेश्च। यत्त्वितरप्रयाजानामारादुपकारकत्वेऽपि समिद्यागस्य सामिधेन्यङ्गभूतसमित्संस्कारकत्वमिति। तन्न। तथात्वे "यो वै प्रयाजानां मिथुनं वेद समिधो बह्वीरिव यजती"ति लिङ्गानु-पपत्तेः। अत्र हि इवशब्देन वस्तुतो बहुत्वाभावेनाऽऽरोपितं बहुत्वमिति सूच्यते। न च तत्समिन्धनाङ्गसमित्सु युज्यते वस्तुत एव तासां बहुत्वात्। आरादुपकारकत्वपक्षे तु सत्यपि बहुवचनान्तसमित्पदस्य देवतात्वे प्रातिपदिकसंख्याबलेनैकस्यैव समित्पदार्थस्य सिद्धौ लिङ्ग-वशेन युक्तो बहुत्वारोपः। तस्माच्चत्वारोऽपि प्रयाजा आरादुपकारका एवेति न विकृतावूहितव्याः। ९। २। १६।

इति श्रीखण्डदेवविरचितायां भाट्टदीपिकायां
नवमस्य द्वितीयपादः।

---

# भाट्टदीपिका।

## नवमाध्यायः।

### तृतीयपादः।

॥ प्रकृतौ ॥ "अग्नेरहं देवयज्यया व्रीहीणां मेधे"त्यादिमन्त्रेषु समवेतार्थत्वादियुक्तिबलेन अग्निव्रीह्यादिपदानां सौर्य्यनीवारादिषु द्वारान्तरसम्बन्धनिमित्तान्यथाभावात्मक ऊहः सिद्ध एव प्रोक्षणादिवत्। तद्द्वारेण पदान्तरप्रक्षेपात्मको भाक्त ऊहः अयमर्थसिद्धोऽप्याक्षिप्य समाधीयते। प्रकृतौ हि अग्निव्रीह्यादिपदेनाऽग्निव्रीह्यादीनां लक्षणयैवाऽपूर्व्वसाधनत्वेन रूपेण प्रतिपादनात् सूर्य्यनीवारादीनामपि तेनैव रूपेण प्रकाशनत्वोपपत्तेर्न पदान्तरप्रक्षेपो युक्तः। अतएव पाशानिति बहुवचनान्तस्य मन्त्रस्य प्रकृतावेकपाशकायां विकृतावपि लक्षणयैवैकत्वप्रकाशकत्वान्नोहः। नह्यग्निव्रीह्यादिपदं शक्त्या अपूर्व्वसाधनीभूतद्रव्यदेवतादिपरं अपि तु लक्षणयैव। "शक्यादन्येन रूपेण भाने भवति लक्षणे"ति न्यायात्। विशेषतस्तु शब्दस्यैव देवतात्वात्तस्य चाऽग्निपदेन लक्षणयैव प्रतीतेः सूर्य्यस्याऽपि तथैव प्रतीतिसिद्धौ नोहसिद्धिरितिप्राप्ते।

सत्यप्यपूर्व्वसाधनत्वस्य प्रकृतावुद्देश्यतावच्छेदकत्वे अग्निव्रीह्यादिपदेन स्वशक्तिजन्यबोधद्वारा अपूर्व्वसाधनीभूतद्रव्यदेवतादि संस्कुर्य्यादित्यर्थोऽवगम्यते। अतएव शक्तिजन्यो बोधोऽपि व्रीहित्वाग्नित्वादिप्रकारक एव न त्वपूर्व्वसाधनत्वप्रकारकः। लिङ्गकल्प्यश्रुतिवाक्ये

तदवच्छिन्नस्योद्देश्यत्वेऽपि मन्त्रान्तर्गतव्रीह्यग्न्यादिपदे लक्षणायां प्रमाणाभावात्। अतएव ताद्दृशबाधेनाऽपि प्रोक्षणजन्यादृष्टवद्विशेष्य एव द्रव्यदेवतादौ संस्कारो जन्यते न तूद्देश्यतावच्छेदकेऽप्यपूर्व्वसाधनत्वे। अतश्चोपकारकपृष्ठभावेन द्वारस्य शक्तिजन्यबोधस्य विकृतावनिदेशे तत्पृष्ठभावेन प्राप्यमाणस्याऽग्न्यादिपदस्य सौर्य्यादौ बाधात् द्वारसत्त्वार्थं पदान्तरप्रक्षेपो युक्त एव।

अतएवाऽग्निव्रीह्यादिपदानामवघातादिवत् तत्त्वेनैव रूपेण प्रकृतौ नियतकार्य्यजनकत्वेन विधानेऽपि तत्कार्य्याभाव इव तत्कार्य्यस्य तेन कर्त्तुमशक्यत्वेऽपि युक्त एव तस्य विकृतौ लोपः। तत्र त्वेतावान् विशेषः। कार्य्याभावे लोप एव। अशक्यत्वे तु तज्जनकोपायान्तरानुष्ठानमिति।

यत्तु मूले प्रकृतावेव नोपायस्य तत्त्वेन विधेयता। अपि तु अपूर्व्वसाधनविशेषोपायत्वेन इतरथा अदृष्टार्थत्वापत्तेः। अतश्चाऽग्न्यादिपदस्य स्वरूपेणाऽविवक्षितत्वाद्युक्त एव पदान्तरप्रक्षेप इति। तन्न। तथात्वे प्रकृतावेव व्रीहिपर्य्यायाणां दलनादेश्चाऽनुष्ठाने वैगुण्यानापत्तेः। येनैव रूपेण मुख्यकार्य्यं प्रति जनकता तेनैव रूपेण नियमादृष्टं प्रत्यपि जनकत्वौचित्याच्च। यत्त्व् अग्निपदेन शब्दरूपदेवताप्रकाशनार्थं लक्षणावश्यम्भाव इति। अत्र ब्रूमः। सत्यामपि लक्षणायां येन स्वशक्यवाचकत्वसम्बन्धेन प्रकृतौ शब्दलक्षणा न तेनैव सम्बन्धेन विकृताविति द्वारभेदाद्युक्तः पदान्तरप्रक्षेपः।

वस्तुतस्तु शब्दस्य देवतात्वेऽपि अपूर्व्वीयदेवतारूपशब्दवाच्यत्वसम्बन्धेनाऽर्थस्याऽप्यपूर्व्वसम्बन्धात् प्रकाश्यत्वोपपत्तेर्न मन्त्रान्तर्गता-

ऽम्न्यादिशब्दे शब्दलक्षणेति युक्तो व्रीहिपदइव पदान्तरप्रक्षेपः। अतएव सर्व्वत्रैव तत्प्राप्तौ "पूर्यति वा एतद्वचोऽक्षरपदेन यदूहति तस्मादृचं नोहे"दिति ऋगक्षरोहपर्य्युदासोऽपि सङ्गच्छते। अतएव तत्कार्य्यप्रकाशनार्थं तत्प्रकाशनसमर्थऋगन्तरोहएव कार्य्यो वैदिकत्वसामान्यात्। तदसम्भवे लौकिकवाक्योहः तथा "न माता-मन्यता"मित्याद्यध्रिगुप्रैषे मात्रादिशब्दोहप्रतिषेधोऽपि "न माता वर्द्धते न पिते"त्यादिरूपोऽन्यत्रोहलिङ्गम्। यद्यपि च नाऽयं प्रतिषेधविधि-र्न्यायप्राप्तत्वादित्युक्तम् मन्त्राधिकरणे कौस्तुभे। तथाऽपि नित्यानु-वाद एवाऽयमन्यत्रोहलिङ्गम्। नचोहस्य न्यायसिद्धत्वे विकृतिविशेषे "विश्वेषां देवानामुस्राणां वपानां मेदसोऽनुब्रूहि अग्नये च्छागस्य वपायामेदसोऽनुब्रूही"त्यादिमन्त्रपाठवैयर्थ्यं तस्य मन्त्रभ्रेषप्रायश्चित्त-प्राप्तिफलकमन्त्रत्वसिद्ध्यर्थत्वात्। ९। ३। १।

॥ जाति ॥ मौद्गचरौ "पौष्करीकाणि वर्हींषि भवन्ती"ति श्रुतं। तत्र वर्हिःपदेन तत्कार्य्याणि हविरासादनवेदिस्तरणहोतृषदन-पवित्रकरणादीनि लक्षयित्वा तदुद्देशेन पुष्करीकाणि विधीयन्ते। जन्यत्वसम्बन्धार्थकश्च तद्धितः। तत्र वेदिस्तरणे प्रकृतिप्राप्ते "स्तृणीत-वर्हिःपरिधत्त वेदिं जामिं मा हिंसीरमुपाशयाना * दर्भैः स्तृणीतह-रितैःसुपर्णैः निष्का इमे यजमानस्य ब्रध्नस्य" इति मन्त्रोवश्यं वर्हिःपदे दर्भपदे चोहितव्य एव हरितपदेऽप्यूहितव्यो न वेति चिन्तायां गुणस्य प्रकृतावविहितत्वेन तत्प्रकाशकपदस्याऽसमवेतार्थत्वादनूहः। कथञ्चिन्मान्त्रवर्णिकगुणविधिकल्पनया वा समवेतार्थकत्वेऽपि इह

* अयामि मा हिंसीरिति भाष्यसम्मतः पाठः।

पुण्डरीकपदस्य गुणविशिष्टपद्मवाचित्वाद्दर्भपदस्थाने ऊहितेन पुण्डरीकपदेनैव तन्निष्ठगुणप्रकाशनोपपत्तेर्न पुनःपदान्तरेण प्रकाशनापेक्षा। अतोऽहरितपदस्य लोप एव नतु तत्स्थाने पदान्तरप्रक्षेप इति प्राप्ते।

विधौ श्रुतस्य पुण्डरीकपदस्य गुणविशिष्टपद्मवाचित्वेऽपि प्रकृतौ दर्भादिपदस्य जातिमात्रवाचित्वात् तन्मात्रप्रकाशनार्थं जातिमात्रवाचकस्य पद्मादिपदस्यैव दर्भादिपदस्थाने ऊहितत्वात् प्रकृताविव पदान्तरेण गुणप्रकाशनार्थं हरितपदस्थाने पुण्डरीकपदशक्यनिष्ठगुणवाचिपदान्तरोह आवश्यक एव। तत्र यद्यपि "पुण्डरीकं सिताम्भोज"मिति त्रिकाण्डीयस्मरणात् सितपदं प्रसज्यते, तथापि "यथाकप्यासं पुण्डरीकमेवमक्षिणी" इति वेदे प्रयोगात् पुण्डरीकाक्ष इत्यादौ रक्ताम्भोज एव शास्त्रस्थानां पुण्डरीकपदप्रयोगाच्च रक्ताम्भोजस्यैव विधेयत्वेन रक्तपदमेवोहितव्यम् शास्त्रदीपिकायान्तु दर्भपदस्थाने पुण्डरीकपदोहवत्। अतःपार्थसारथेरक्तगुणस्याऽपि तेनैव प्रकाशनान्न रक्तपदोहः सिध्येदिति ध्येयम्। ६। ३। २।

॥ लौकिके ॥ दैक्षे पशौ "यूपो यज्ञस्य दुरिष्टमामुञ्चते यद्युपन्यसेद्यज्ञस्य दुरिष्टमामुञ्चते तस्माद्यूपोनोपस्पृश्योयद्येकं यूपमुपस्पृशेदेष ते वायो इति, ब्रूयाद्यदि द्वावेतौ ते वायू इति, यदि बहूनेते ते वायव" इति श्रुतम्। तत्र यूपस्य प्रकरणादिना प्राप्तत्वात् तत्तत्संख्याकस्पर्शएवेदं मन्त्रविधानमित्यविवादम्। स्पर्शः परं विहितः अविहितो वेति चिन्तायां प्रकरणादग्नप्रतिग्रहेष्टिन्यायेन च विहितस्पर्शाङ्गतया तन्निमित्तकतया वा नैमित्तिकमिदं कर्माऽङ्गतया

विधीयते। नह्मीदं दोषनिर्घातार्थं येन विहिते तदभावादप्रवृत्ति:। यज्ञस्य विहितत्वेन अरिष्टजनकत्वासम्भवेनाऽर्थवादमात्रत्वात्। यदि-त्वत्र सर्व्वनिषेधाधिक्यायदिमन्त्रोपादानाच्चाऽन्नप्रतिग्रहेष्टिवैलक्षण्य-मापद्येत। ततोऽस्त्वयं विहितस्यैव यूपान्वारम्भादे: सर्व्वस्य ग्रहणा-ग्रहणवत् पाक्षिकत्वसिद्ध्यर्थो निषेध:। ततश्च तत्करणपक्षे अयं मन्त्रपाठोऽङ्गमिति यदिमन्त्राविरोध:। यदि त्वष्टदोषदुष्टविकल्प-भिया निषेधस्य रागप्राप्तयूपस्पर्शविषयत्वमापद्येत, ततो निषेधस्याऽपि क्रतुमध्यप्रसक्तगमनागमनादिप्रयुक्तयूपस्पर्शविषयत्वेन "नाऽनृतंवदेन्न-स्त्रियमुपेया"दित्यादिवत् क्रत्वङ्गत्वोपपत्ते:। स्पर्शस्य क्रतुवैगुण्यापाद-कत्वावसायात् तत्प्रायश्चित्तत्वेनाऽयं मन्त्रविधि: क्रत्वर्थ एव।

एवञ्च यूपानेकत्वन्यायादेवै"तीत" इत्याद्यूहोमन्त्रत्वसिद्ध्यर्थं पुन: पठ्यते। नचैवमपि ऊहितमन्त्रपाठमात्रस्य प्रयोजनलाभेऽपि यदि द्वावित्यादित्रिनियोगप्रयोजनाभाव: देवसन्निधिपठितानां अयाणा-मेषां पाशाधिकरणन्यायेन तत्रैव विकल्पप्रसक्तावुत्कर्षसिद्ध्यर्थत्वा-दिति प्राप्ते।

वस्तुतो यज्ञस्य पापापरपर्य्यायदुरिष्टजनकत्वाभावेऽपि निन्दार्थवादे यज्ञप्रयोगजन्ययूपनिष्ठदुरिष्टस्य यूपस्पर्शकर्त्तरि सञ्चारसङ्कीर्त्तनेनाऽस्य निषेधस्य यज्ञप्रयोगसमाप्त्युत्तरकालीनत्वावगमात् पुरुषार्थत्वावगते-रस्याऽपि तद्दोषनिवारणार्थस्य प्रायश्चित्तस्य लिङ्गेन प्रकरणं बाधित्वा पुरुषार्थत्वमेव। अतएव सूत्रभाष्यस्य स्वारस्याद्यूपकार्य्यापवर्गोत्तर-मेवेदं प्रायश्चित्तं नतु वार्त्तिकादिस्वारस्यात् क्रतुमध्यगतलौकिकस्पर्शे-ऽपीति ध्येयम्।

अतएव यज्ञस्यैव यूपनिष्ठदोषजनकत्वाद्यज्ञात् पूर्व्वं कारणाभावेन अशुचित्वापरपर्य्यायदोषाभावात् क्रतुमध्यगतलौकिकस्पर्शेऽपि न दोषः। अतएव "यूपचित्याद्युपस्पर्शने स्नाया"दिति स्मार्त्तमपि प्रायश्चित्तं वहिःक्रतुविषयमेव। निषेधस्य मूलान्तराकल्पनात्। अस्तु वा तस्य सामान्यविषयत्वादन्तःक्रतुगतलौकिकविषयत्वमपि। तदा तु ऋत्विक्कर्त्तृको विहितोऽपि स्पर्शः शामित्रवनिषेधविषय एव तमतिक्रम्य प्रवृत्तस्याऽऽर्त्विज्यविधानोपपत्तेः। सर्व्वथा यूपकार्य्यापवर्ग एवाऽयं पुरुषार्थो मन्त्रपाठः। अतएव निषेधवाक्यप्राप्तयूपमनूद्य मन्त्रत्रयमिदं स्वतन्त्रमेव तत्तत्संख्याकस्पर्शे निमित्ते तज्जन्यदोषनिर्घातार्थं विधीयते। नतु कश्चित् कस्यचिदूह इति सिद्धम्। ९। ३। ३।

॥ अन्याय ॥ द्वैचएवपशुपाशप्रमोचनेऽनुमन्त्रणद्वयमाम्नातम्। "अदितिःपाशं प्रमुमोक्तेत"मित्येकवचनान्तमेकं। "अदितिःपाशान् प्रमुमोक्तेतानि"ति बहुवचनान्तमपरं। तत्राऽन्त्यस्याऽपि विकल्पेनैकपाशकायामेव प्रकृतौ निवेश इति वक्ष्यते। तदेतन्मन्त्रद्वयं द्विपशुकायां विकृतावतिदेशेन प्राप्तं तत्रैकवचनान्तस्य तावत् प्रकृताविव समवेतपाशसंख्याप्रकाशकत्वाद्द्विवचनेनोह इत्यविवादमेव। न च प्रतिपाशमोचनमस्य वृत्तेरनूहःशक्यः। अस्याऽनुमन्त्रणमन्त्रत्वेन तन्त्रेणैव प्रयोगात्। बहुवचनस्य तु प्रकृतावसमवेतार्थकत्वेन अदृष्टार्थं वा साधुत्वार्थं वा प्रयोगाद्विकृतावनूहः।

अस्तु वा लक्षणयाऽप्यर्थप्रकाशकत्वे सम्भवति साधुत्वाद्यर्थकत्वस्याऽन्याय्यत्वाद्बहुवचनस्यैकत्वलक्षणार्थत्वम्। तथाऽपि स्वशक्त्या

श्यावयवजन्यावयविप्रवृत्तिसंख्यात्वसम्बन्धेन प्रकृतावेकत्वलक्षणाया इव विकृतौ द्वित्वलक्षणाया अपि सम्भवादनूह.। नचैवं "निमित्त सुपांश्चि"त्यनुशासनेनैव विहितत्वात् न च दृष्टानुविधि श्छन्दसि भवतीत्यनुशासनात् प्रकृतावस्य दृष्टत्वेनैकत्वलक्षकत्वेऽपि विकृतावदृष्टत्वेन द्वित्वलक्षकत्वानुपपत्तिरिति। वाच्यम्। प्रकरणेन प्रकृतौ दृष्टत्ववदतिदेशेन विकृतावपि दृष्टत्वात् इतरथोत्कर्षेणाऽस्य मन्त्रस्योपपत्तेरेकत्वस्याऽपि लक्षणानापत्तेः। अतो द्विपाशकायामपि विकल्पेन द्विवचनबहुवचनप्रयोग इति प्राप्ते—सत्यं। निरूढसम्बन्धेन द्वित्वे लक्षणासम्भवस्तथाऽपि सा किं "सुपांसु" इत्यनुशासनशिष्टतया निरूढलक्षणा वा स्या"द्गङ्गायां घोष" इतिवत् साम्प्रतिकी वा, नाऽऽद्यः अनुशासनस्य "दृष्टानुविधिः छन्दसी"त्यनेन यत्रैव पाठाख्यं दर्शनं तद्विषयत्वेनैव नियतत्वात्। अन्यथा वैदिकप्रमाणप्रमितमात्रस्य दृष्टपदार्थत्वे विश्वजिति स्वर्गकामपदे ऊहादौ च छान्दसविधिप्रवृत्त्यापत्तेः। अतश्छान्दसविधेः पठितमात्रविषयत्वाद्विकृतावतिदिष्टमन्त्रे अप्रवृत्तेर्नाऽनुशासनिकनिरूढलक्षणया द्वित्वोपस्थितिः। ९। ३। ४।

॥ नान्त्यः ॥ अनुशासनाविषयीभूतेऽपि बहुवचनस्य लक्षणाङ्गीकारे अनुशासनवैयर्थ्यापत्तेः अस्तु वा सा। तथाऽपि प्रकृतौ यया वृत्त्या एकत्वोपस्थितिर्न तया विकृतौ द्वित्वोपस्थितिरिति प्रकृतवृत्तिबाधात्तद्वारकस्य बहुवचनस्याऽपि बाधे द्वित्वप्रकाशनरूपकार्यानुरोधेन शक्तद्विवचनप्रक्षेपावश्यम्भावः। स्वाधीने शब्दप्रयोगे किमित्यवाचकं पदं प्रयोक्ष्यामह इति न्यायात्। अतएव द्वित्वोपस्थित्यर्थम्

मङ्गुलिविन्यासोप्यनाशङ्कः मन्त्रपदान्तराणामर्थबोधकत्वानापत्तेः। अतएव बहुपाशकस्थले बहुवचनप्रयोगेऽपि न तस्य मन्त्रत्वं प्रकृतौ निरूढ़लक्षणया एकत्वप्रकाशक एव तस्मिन्मन्त्रत्वात् इह पुनस्तया बहुत्वप्रकाशके तस्मिन्मन्त्रत्वानुपपत्तेः। ८। ३। ५।

॥ विप्रतिपत्तौ ॥ बहुवचनान्तपाशमन्त्रस्य दैक्षएव निवेशमङ्गी-कृत्य विकृतावूहश्चिन्तितः। स एव त्विह चिन्त्यते किं बहुपाशकाया-मुत्कर्ष उत दैक्ष एव निवेश इति। तत्र बहुत्वप्रकाशनलिङ्गादनुष्ठान-सादेश्यादेर्बाधे पूषानुमन्त्रणादिवद्विकृतावुत्कर्षः। न च तद्वत् सामान्यसम्बन्धबोधकप्रमाणाभावः। ज्योतिष्टोममहाप्रकरणस्यैवा-नर्थक्यतदङ्गन्यायसहकृतस्य क्रतुपशुषु सामान्यसम्बन्धबोधकस्य सत्त्वात्। नचैवमपि पाशप्रातिपदिकार्थस्य पाशस्य द्वितीयार्थस्य कर्म-त्वस्य प्रमोचनभावनायाश्च प्रधानभूताया दैक्षेऽपि सम्भवेन तत्प्रति-पादकानां लिङ्गविरोधाभावेनाऽनुष्ठानसादेश्यादिबाधे प्रमाणाभावाच्च गुणभूतबहुवचनमात्रानुरोधेनोत्कर्षकल्पना युक्तेति। वाच्यम्। अने-केषामपि पदानामेकव्रीह्यादिपदानुरोधेन व्राह्निप्रयोग एव सङ्कोच-वदुत्कर्षस्याऽप्युपपत्तेः। इतरथा एकपूषपदानुरोधेनेतरपदाना-मुत्कर्षानापत्तेश्च। गुणभूतलिङ्गानुरोधेन प्रातिपदिकादेर्मेषोत्कर्षं सङ्कोचवद्गुणभूतवचनानुरोधेनाऽपि तदुत्कर्षोपपत्तेश्च प्रातिपदि-कार्थवल्लिङ्गसंख्यादेरपि कारकएवाऽन्वयेन प्रातिपदिकार्थं प्रति-संख्यादेर्गुणत्वे प्रमाणाभावाच्च। एवञ्चैकवचनान्तपाशमन्त्रेण विकल्पोऽप्यष्टदोषदुष्टो न भवेदितिप्राप्ते।

नात्रोत्कर्षः। गुणभूतबहुवचनानुरोधेन प्रधानभूतानां बहूना-

मुत्कर्षे प्रमाणाभावात्। विभक्त्युपात्तलिङ्गसंख्यान्वयित्वरूपसत्त्व-समाख्यानुरोधेन पार्ष्णिकान्वयवेलायां लिङ्गसंख्यादेः प्रातिपदिकार्थं प्रत्यप्राधान्येनैवाऽन्वयाच्च। नचैवं लिङ्गाद्यनुरोधेन प्रधान-भूतबहुतरेतरपदसङ्कोचस्याऽप्यनापत्तिः गुणभूतानुरोधेन प्रधान-भूतस्य सङ्कोचेऽपि प्रकरणादिबाधपसङ्गेनोत्कर्षे प्रमाणाभावात्। सङ्कोचे अवर्जनीयतया नान्तरीयकसन्निधिबाधेऽपि उत्कर्षे नान्त-रीयकत्वाभावेन तद्बाधस्याऽन्याय्यत्वाच्च। यूपादिपदानान्तु गुण-त्वाभावात् तद्व्यतिरेकेणेतरपदानां प्रकृतोपयोग्यर्थप्रतिपादकत्वा-भावाच्चोत्कर्ष इति वैषम्यम्। प्रकृते तु पशुपाशकर्मकोन्मोचन-मात्रप्रकाशनस्यैवोपयोगित्वात् संख्यायाः स्वरूपेण प्रकाशना-नपेक्षत्वात् संख्यावाचकपदवैयर्थ्यपरिहारार्थं तस्य पाशसंख्या-प्रकाशनोपयोगकल्पनेऽपि नेतरपदानां तद्व्यतिरेकेण प्रकृतोप-योग्यर्थाप्रतिपादकत्वमिति विशेषः। अतएव बहुवचनं "सुपांसु" इत्येवं स्वशक्यबहुत्वाश्रयीभूतपाशावयवजन्यपाशरूपावयविवृत्तित्व-सम्बन्धेनैकत्वलक्षणार्थमेव।

एवञ्च फलमुखत्वाद्विषमशिष्टोऽपि विकल्पो न दोषायेति धेयम्। इतरथोत्कर्षपक्षेऽपि एकवचनान्तमन्त्रस्यैवोहेन बहुपाश-कायामन्यस्यामिव क्रतुपशुष्वपि बहुवचनान्तत्वोपपत्तेस्तत्पाठफल-मन्त्रत्वमात्रसिद्धिरूपं मन्दं स्यात्। ९।३।६।

॥ अपूर्व्वं ॥ अतएव दर्शपूर्णमासयोः "पत्नीं सन्नह्य" इत्येकवचनान्तो मन्त्र एकपत्नीकप्रयोग इव द्विबहुपत्नीकप्रयोगयोरप्यविकारेणैव प्रयो-क्तव्यः। न च लिङ्गेनैकपत्नीकप्रयोग एव मन्त्रोऽङ्गं द्विबहुपत्नीक-

प्रयोगयोस्तुल्येनाऽतिदिश्यत इति युक्तं प्रयोगयोः परस्परं प्रकृतिविकार भावे प्रमाणाभावात्। लिङ्गस्य वक्ष्यमाणरीत्या सर्व्वसाधारणत्वाच्च। यत्र हि उपदेशाख्यप्रापकप्रमाणस्यैकमात्रविषयत्वम् अन्यत्र च कार्य्यमुखेनाऽतिदेशतः प्राप्तिस्तत्रैवोहः। न च प्रापकप्रमाणस्य सर्व्व-विषयत्वे अत्र च पाशन्यायेन प्राप्तिपदिकादिलिङ्गस्य सर्व्वविषय-त्वोपपत्तेरेकवचनानुरोधेन सङ्कोचायोगात्राऽस्य प्रापकप्रमाणस्यैकपत्नी-प्रयोगमात्रविषयत्वम्। न च क्रतुपशूनां समानविधानत्वकत्वा-चिन्तायां “प्रास्मा” इत्यस्य लिङ्गानुरोधेन मेषीवर्ज्जं सङ्कोचवदिहा-प्येकवचनानुरोधेन मन्त्रसङ्कोचोपपत्तिरिति वाच्यम् विना कारणं पुंलिङ्गस्य लक्षणायां प्रमाणाभावेन तत्र सङ्कोचोपपत्तावपि प्रकृते सङ्कोचे प्रमाणाभावात्। नह्यत्र द्विबहुपत्नीकप्रयोगे एकवचनस्य लक्षणा। प्रत्येकव्यक्तिगतैकत्वाभिप्रायेण तदुपपत्तेः। यथैव हि शुक्ला घटा इत्यादौ शुक्लगुणस्य प्रत्येकवृत्तित्वेनाऽन्वयः। तथैकवच-नाभिहितस्यैकत्वस्याऽपि प्रत्येकव्यक्तिवृत्तित्वेनाऽन्वये न काचित् क्षतिः। न चैवं “बहुषु बहुवचन”मित्याद्यनुशासनस्य निर्विषयत्वा-पत्तिः। बहुत्वस्य शाब्दबोधे विवक्षायां तदुपपत्तेः। नचैवं पशुना यजेतेत्यादौ द्वित्रिपशुग्रहणेऽपि बाधकानापत्तिः। प्रथमातिक्रमे कारणाभावेनैकवचनस्यैच्छिकपक्षान्तरव्यावृत्तिफलकत्वोपपत्तेः। अतश्च द्विबहुपत्नीकप्रयोगे एकवचनान्तस्यैव मन्त्रस्य प्रयोगोपपत्तेर्न तत्रोहो न वा “व्रीहीणा मेधे”तिवल्लोप इति सिद्धम्। ९। ३। ७।

॥ विकृतौ ॥ एवं प्रकृतावेव समवेतार्थकत्वेन द्विबहुपत्नीप्रयो-गयोरपि मन्त्रस्याऽविकारे सिद्धे विकृतौ द्विबहुपत्नीकप्रयोगयोरपि

प्रत्येकव्यक्तिगतत्वेनैवैकवचनस्य प्रयोगोपपत्तेर्नोहः । नचैवमनेकपाशकायां विकृतावपि एकवचनान्तस्य पाशमन्त्रस्योहानापत्तिः एकवचनस्य प्रत्येकव्यक्तिगतत्वेनोपपत्तेरिति वाच्यम् प्रकृतौ पाशस्यैकत्वेन तद्गतैकवचनस्याऽपूर्व्वसाधनवृत्तिपरिच्छेदकीभूतसंख्याप्रकाशकत्वेन विकृतावपि तादृशसंख्याप्रकाशनार्थमूहावश्यम्भावात् । प्रकृते त्वेकवचनस्य प्रमाणान्तरावधृतपशुगतानेकत्वावरुद्धप्रयोगविषयेऽपि पाशाधिकरणन्यायेन प्रवृत्त्यवगतेर्न परिच्छेदकीभूतसंख्याप्रकाशकत्वमिति वैषम्यम् । ९ । ३ । ८ ।

॥ अध्रिगुः ॥ एवं क्रतुपशूनां समानविधानत्वपूर्व्वपक्षे "प्रास्मा" इत्यध्रिगुप्रैषएकवचनान्तएव तेषु प्रयोक्तव्यः । पशौशब्दवत् । नत्वेकवचनानुरोधेनैकपशुक एव दैक्षादौ एकवचनस्य प्रत्येकव्यक्त्यभिप्रायेण गणेऽपि श्रुत्यैव सम्भवात् । अतएव यस्य पुंलिङ्गस्य श्रुत्या स्त्रीपुंगणे असम्भवस्तत्राऽत्यन्तनिषिद्धलक्षणायां प्रमाणाभावात्मेषीवर्ज्जपुंपशुष्वेव सङ्कोच इति वैषम्यम् । असमानविधानत्वसिद्धान्ते तु "प्रास्मा" इत्ययं वचने लिङ्गे च "प्रैभ्यो स्याम्मिं भरतादि"त्येवमूहितव्य एव । तदेतत्तार्त्तीयस्य समानविधानत्वविचारस्य प्रयोजनमात्रकथनम् । ९ । ३ । ९ ।

॥ प्रतिनिधौ ॥ यत्र तु अवयवसादृश्येन प्रतिनिधिनियमो यथा नीवारपूतीकादौ तत्र व्रीह्यादिशास्त्रेणैव नीवारादिगतव्रीह्यवयवसमानजातीयावयवानामपि साधनत्वावगतेः संस्कारविधीनां मुख्यद्रव्यसमानविधानत्वस्य तृतीये स्थापितत्वात् "व्रीहीणां मेधे"ति मन्त्रोऽपि अविकारेणैव प्रवर्त्तते । नतु नीवाराणामित्येवमूहितव्यः ।

एवं सोमपदघटितमन्त्रा अपि, प्रतिनिधौ मुख्यस्थानापत्त्यतिदेशे प्रमाणाभावात्। न च नीवारगतव्रीह्यवयवादौ व्रीहित्वजातौ प्रमाणाभावेन तत्र कथं व्रीहिपदप्रयोगः। पुरोडाशप्रकृतित्वस्य षष्ठ्यर्थत्वेन व्रीहिपदवाच्यव्रीहित्वजातेः प्रकृतित्वायोगे व्रीहिपदेन लक्षणया व्रीहित्वसाधनताक्षिप्तसाधनताकत्वसम्बन्धेन व्रीह्यवयविन इव तदवयवानामप्युपादानेन नीवारगतव्रीह्यवयवानामपि प्रकाशनोपपत्तेः। व्रीहिभिर्यजेतेत्यनेन हि व्रीहित्वजातेः साधनता शब्देनोच्यते तदाश्रयावयविनस्तदवयवानाञ्च साधनता त्वर्थादाक्षिप्यते इत्युक्तं तृतीये।

वस्तुतः पुरोडाशस्य व्रीह्यवयवतण्डुलप्रकृतित्वस्यैव सत्त्वेन व्रीहिपदेन व्रीह्यवयवानामेव लक्षणाच्च। सोमत्वादिकं त्ववयवावयविवृत्तिजातिरिति पूतीकगतसोमावयवेष्वपि साऽस्त्येव पूतीकगतविजातीयावयवबाहुल्यात् तु सा नाऽभिव्यज्यते। अतस्तत्राऽपि नोहः। यदि हि नीवारत्वादिना नीवाराणां प्रतिनिधौ साधनत्वं भवेत् तदा तेषां साङ्गप्रधानकरणासम्भवे कर्म्मविध्याक्षिप्तानां संस्कारविध्युत्तरप्रवृत्तिकतया समानविधानत्वाभावाद्ववेदप्यूहः।

वस्तुतस्तु तदाऽपि नीवारेषु व्रीहिधर्म्मातिदेशे प्रमाणाभावः। सत्यपि व्रीहिकार्य्यापन्नत्वे लौकिकधर्म्मग्रहणेनैव तेषां निराकाङ्क्षत्वाद्यूपावटस्तरणबर्हिषीवाऽतिदेशकल्पनानुपपत्तेः। अन्यथा यूपावटस्तरणेऽपि बर्हिःसाध्यत्वसादृश्यादतिदेशापत्तेः। फलचमसे तु "तमस्मै भक्षं प्रयच्छे"दिति लिङ्गादेवातिदेश इति वैषम्यम्। यदि तु द्रव्यमात्रासम्भवे कर्म्मविधिमात्रालोचनयैव संस्कारविधिभ्यः पूर्व्वमेव

नीवाराणां साधनत्वावगम इति विभाव्यते तेषां प्रोक्षणादिधर्म्मांशे समानविधानत्वेऽपि "व्रीहीणां मेध" इति मन्त्रस्य यवप्रयोग इव नीवारप्रयोगेऽपि लोपो भवेन्न तूहः ।

इयमेव च द्वयो गतिर्यत्र नाऽवयवघटितसादृश्येन प्रतिनिधिर्यथाऽवघातप्रतिनिधितयानखनिनिर्लुञ्चनादौ । तत्र सर्व्वथैव धर्म्माणां लोपोऽ"धिसवनमसि वानस्पत्य"मित्यादिमन्त्रमात्रलोपो वा । प्रकृते तु नीवारपूतीकादीनाम् अवयवघटितसादृश्येन प्रतिनिधित्वाद् द्रव्यप्रारूढेणैव साधनत्वावगतेः संस्काराणामिव व्रीह्यादिपदघटितमन्त्रस्याऽपि अनूहेन प्राप्त्यविघातः । तदेतदपि तार्त्तीयाधिकरणस्य प्रयोजनमात्रकथनम् । ९ । ३ । १० ।

॥ असंसर्गेषु ॥ देवे अग्निगुप्रैषे "उदीचीनाम् अस्य पदोनिधत्तात् सूर्य्यञ्चक्षुर्गमयताद्वातं प्राणमन्ववसृजतादन्तरिक्षमसुन्दिशः श्रोत्रं पृथिवीं शरीर"मिति श्रुतं तत्र पशुगणे अस्येत्येकवचने द्विवचनबहुवचनोहो निरपवादः । पद इत्यत्राऽनूहोऽपि चक्षुरादिपञ्चकविषये तूहानूहचिन्तायां सत्यऽपि अधिष्ठानभेदे इन्द्रियं लाघवाद्व्यासज्यवृत्त्येकमेव कथ्यते । अभिमतञ्च परेषामपीदं प्राणवायौ । अतश्च तस्यैकत्वादेकवचनं समवेतार्थकमेव पशुभेदे तद्भेदादूहितव्यम् । प्राणपदवाक्ये प्राणन्तु अधिष्ठानस्याऽप्येकत्वादेकमेवेति तत्र सुतरामूहः । शरीरस्य तु प्रत्यक्षत एकत्वात् ततोऽपि । न च चक्षुषो व्यासज्यवृत्तित्वे एकगोलकविनाशेऽपि चाक्षुषानापत्तिः एकगोलकमात्रवृत्तिखण्डचक्षुरन्तरेणैव चाक्षुषोपपत्तेरितिप्राप्ते, भिन्नदेशावस्थिताश्रयभेदे तदाधेयभेदस्य रूपादावौत्सर्गिकस्य त्यागेन

व्यासज्यवृत्तित्वकल्पने प्रमाणाभावादन्यथासर्व्वप्राणिसाधारण्येनैक-चक्षुःकल्पनापत्तावस्मादिष्टसिद्ध्यापत्तेः प्रत्यधिष्ठानं नानैवेन्द्रियम्। तच्च प्रमाणान्तरवशात्तैजसादीत्यन्यदेतत्। तच्च पत्नीन्यायेनैकत्वस्य प्रत्येकव्यक्त्यभिप्रायेणाऽप्युपपत्तेरनूह एव।

वस्तुतस्तु गोलकाधिष्ठितस्य सूर्य्यगमनासम्भवात् ततो निर्गतस्यैवाऽत्र चक्षुःपदेनाभिधानं। न च पर्य्यग्निकरणोत्तरमेवाग्निगुप्रेषात् तदानीञ्च चक्षुरादीनां गोलकस्थत्वान्न निर्गमनमिति वाच्यम् अनन्तरभाविसंज्ञपनफलस्यैव पूर्व्वमुच्यमानत्वेन बाधकाभावात्। अतश्च निर्गतस्य चक्षुषः प्रदीपप्रभावदनेकस्याऽपि संसर्गेणैकीभावात् प्रकृतावेकवचनं निर्व्वाह्यम्। ततश्च विकृतावपि तथैव सम्भवादनूहः। न हि निर्गतचक्षुषां प्रदीपानामिव भिन्नदेशावस्थानस्यैवकल्पनान्नैकीभावः। एकगोलकनिमीलने तत्पुरःप्रदेशावस्थितघटादेर्गोलकान्तरस्थितचक्षुषा दर्शनेन निर्गतचक्षुषो विस्फारणकल्पनादेकीभावोपपत्तेः। अत्र च तेजस्त्वादिवच्चक्षुष्ट्वादिकमपि अवयवावयविवृत्तिजातिः। तेन तत्तद्गोलकस्थिततत्तच्चक्षुर्भिरारब्धोवयव्यऽपि चक्षुरेवेति नोहप्रसक्तिः। एवं प्राणपदवाच्यप्राणेन्द्रियेऽपि बोध्यम्। शरीरे तु यद्यपि नैकीभावसम्भवस्तथाप्युच्यमानस्य कारणीभूतसूक्ष्मपृथिव्यां लयापरपर्य्यायगमनस्य प्रत्यक्षबाधितत्वात् प्रकृतावेव स्तुत्यर्थमुच्यमानतया असमवेतार्थकत्वादनूहो द्रष्टव्यः। शरीरे ऊहं केचिदिच्छन्ति। ८। २ ११।

॥ एकधा ॥ तत्रैव प्रैषे “एकधाऽस्य त्वचमाच्छता”दिति श्रुतम्। तत्र षष्ठ्यन्तं द्वितीयान्तञ्च पश्वगणे द्विबहुवचनान्तेनोहितव्यमित्य-

विवादम् एकधाशब्दस्य त्वविकारोऽथ वा अभ्यासात्मको भाक्त ऊह इति चिन्तायां एकधाशब्दस्य एकप्रयत्नसाध्यत्वे एकदेशकालत्वे च लौकिकप्रयोगेण नानार्थकत्वावगतेः प्रकृतावेकत्वात्त्वचोदेशतः कालतो वा साहित्यरूपार्थोऽसम्भवेन त्वचःसाकल्यसम्पत्तये एकप्रयत्नसाध्यत्वस्यैव ग्राह्यत्वेऽपि विकृतावश्रुताभ्यासकल्पने प्रमाणाभावादेकधाशब्देनार्थान्तरभूतं देशतः कालतो वाऽनेकत्वकच्छेदनसाहित्यमेव शक्त्या प्रकाश्यत इत्यविकारादनूहः। यदि तु उपकारपृष्ठभावेन पदार्थानामतिदेशात् प्रकृतौ यस्य शब्दस्य योऽर्थो निर्णीतस्तस्य तदर्थपृष्ठभावेनैव प्राप्त्यवगतेर्नार्थान्तरप्रकाशनस्य प्रयोजनत्वकल्पनमुपपत्तिमदिति विभाव्यते। तदाऽस्तु एकप्रयत्नसाध्यत्वमेव विकृतावपेकधाशब्दार्थः। तथाऽपि तु नाऽभ्यासः। सकृदुच्चरितेनैवेकधाशब्देन सर्व्वत्वग्गतैकप्रयत्नसाध्यच्छेदनकत्वस्य वक्तुं शक्यत्वात्। यद्यपि च सहितानां सर्व्वासां त्वचामेकप्रयत्नसाध्यच्छेदनकत्वं बाधितम् तथाऽपि प्रतिप्रधानं गुणावृत्तेर्युक्तत्वादुद्देश्यानां त्वचां साहित्याविवक्षणाच्च प्रत्येकमेव सम्मार्गादिवत्तास्वेकप्रयत्नसाध्यच्छेदनकत्वस्यान्वयबोधोपपत्ते र्नार्थोऽभ्यासेनेति प्राप्ते।

प्रकृतौ यादृशनिर्णयं प्रति यादृशपदज्ञानस्य यादृशसामग्रीसत्त्वे फलोपधायकता विकृतावपि तादृशसामग्रीसत्त्व एव तादृशपदज्ञानस्य तादृशनिर्णयोपधायकत्वं वाच्यम् इतरथा प्रकृतिवद्भावानुपपत्तेः। तदिह प्रकृतौ एकधाशब्देन सहकार्य्यान्तरनैरपेक्ष्येणैकत्वकत्वं विशेष्यतावच्छेदकीकृत्य त्वग्विशेष्यकैकप्रयत्नसाध्यच्छेदनकत्वप्रकारकः पर्य्याप्तिसंसर्गको निर्णयोजनितः। न चाऽसौविकृतौ सकृदुच्चरितेनैक-

धाशब्देन सहकार्य्यान्तरनैरपेक्ष्येण सम्भवति। तस्य समुदितत्वकत्वं विशेष्यतावच्छेदकोक्तत्याऽपि तादृशबोधजनकत्वात्। अतश्च तादृश-बोधे बाधितविषयत्वप्रतिसन्धानस्याऽपि उक्तनिर्णये सहकारि-कारणता वाच्येति। अधिकसामग्रीकत्वात् प्रकृतिवद्भावबाधापत्तिः। अतः प्राकृतसहकारिकारणमात्रेण प्रत्येकत्वग्विशेष्यकनिरुक्त-बोधजननार्थं एकधापदस्य यावत्त्वचमभ्यास आवश्यक एव। सोऽयं अभ्यासमात्रेण प्रकृतितोऽन्यथाभावादूह इति व्यवह्रियते न तु अयं वस्तुतः संस्कारोहादिसाधारणोहलक्षणाक्रान्त इति धेयम्। ८। १। १२।

॥ मेधपतित्वम् ॥ तत्रैव प्रैषे "उपनयत मेध्यादुर आशासानामेध-पतिभ्यां मेध"मिति श्रुतम्। केषाञ्चित् तु शाखिनां "मेधपतयो मेध"-मिति। तत्र न तावच्छाखाभेदेनाऽत्र मन्त्रभेदः। एकदेशवैल-क्षण्येऽपि शाखान्तराधिकरणन्यायेन प्रत्यभिज्ञानबलेन तदेकत्वाव-गतेः। ततश्च तदर्थोऽपेक्ष एव वाच्यः। तेन मेधस्य पशोः पति-र्यजमानो देवता वा अर्थो वाच्यो न तूभयं न च मेधपतित्वस्य शक्य-तावच्छेदकस्यैकत्वात् तदवच्छिन्नोभयाभिधानेऽपि न दोषः इति वाच्यम् तथात्वेऽपि इतरपदानां तत्तत्तदर्थघटिततत्तद्वाक्यार्थविष-यकविलक्षणबोधद्वयजनकत्वानुपपत्तेः। तथा हि यजमानपरत्वे यजमानाय यो मेधः पशुर्भोगसाधनत्वेनाऽऽसीत् तं मेध्या भवन्त ऋत्विजः दुरो यज्ञद्वारश्चोत्तानोत्करयोर्मध्यं उपनयत स्वोयदक्षिणां यजमाननिष्ठं फलं वा आशासानाः सन्त इत्यर्थः। देवतापक्षे देवतायै मेधं पशुमाशासाना मेध्या भवन्तस्तं दुरःप्रति उपनयतेत्यर्थः।

केचित्तु देवतापक्षे देवतायै पशुमाशासाना भवन्तो मेधपास्तदीया दुरो यज्ञद्वाराणि हृदयादीन्युपनयतेत्यर्थ इत्याहुः। सर्व्वथा विलक्षणबोधद्वयजनकत्वानुपपत्तेरेकरूपएवाऽर्थो वाच्यः। न च बोधद्वयजनकत्वे सकृदुच्चरितस्य शब्दस्य सकृदर्थप्रत्यायकत्वमिति नियमभङ्ग एव दूषकतावीजं न च तदत्राऽस्ति शाखाभेदेन द्विःश्रुतस्य सकृदुच्चरणाभावादिति वाच्यम् तथाऽपि लिङ्गकल्पितश्रुतेरनेकत्वकल्पनागौरवभिया एकस्यैवाऽर्थस्य वाच्यत्वात् तदिह किंपरत्वमिति चिन्तायां देवताया विग्रहाद्यभावेन स्वामित्वापरपर्य्यायपतित्वानुपपत्तेर्यजमानपरत्वमेव। न च तस्यैकत्वेन द्विवचनानुपपत्तिः पाशन्यायेन तदुपपत्तेः।

वस्तुतस्तु दम्पत्योर्व्यासज्यवृत्तिकर्त्तृत्वैक्याद्यजेतेतिवदेकवचनं पत्नीयजमानाभिप्रायेण च वसानावितिवद्द्विवचनम्। अतएवैकपत्नीकप्रयोगे द्विवचनान्तएव मन्त्रोऽन्यत्र त्वेकवचनान्तएवेति नाऽऽम्नाते विकल्पोऽपीति प्राप्ते,—

यजमानपरत्वे पशोराशासनस्य तावत् सिद्धत्वेनैव वैयर्थ्यं दक्षिणादीनां चाऽश्रुतानां कल्पनाच्च तदाशासनमपि सम्भवि। अतोदेवत्वादिव्यवहारसिद्ध्यर्थं देवताया अपि स्वीकारात्स्वसम्बन्धस्य इतोऽवसाधितत्वात् तमादाय मेधपतित्वोपपत्तेर्देवतापरत्वमेव। एकत्वन्तु त्वदुक्तरीत्यैव देवतात्वस्य अग्नीषोमयोर्व्यासज्यवृत्तित्वादेकत्वोपपत्तेरधिष्ठानभेदेन च द्वित्वोपपत्तेर्ममाऽप्युपपन्नमेव। कर्तृत्ववच्च देवतात्वेऽपि मेधपतित्वं सामानाधिकरण्यादेवोपपन्नमिति न काचित् क्षतिः।

एवञ्च विकल्पोऽपि फलमुखत्वान्न दोषाय। प्रयोजनं पूर्व्वपक्षे सप्त द्वयोरपूर्व्वो विकल्पश्च अर्थद्वयानुसन्धाने सिद्धान्ते त्वग्रिमाधिकरणे वक्ष्यते। ८। ३। १२।

॥ नियमो वा ॥ यत्र देवतात्वमेकमधिष्ठानन्तु एकं बहु वा तत्र द्विवचनान्तस्याऽधिष्ठानपरत्वात् तदनुरोधेनोहः। एकवचनान्तस्य त्वविचार एव देवतात्वस्यैकत्वात् यथा "वायव्यं श्वेतमालभेत" "वैश्वदेवं धूम्रमालभेत" "स एतान् पशूनादित्येभ्य आलभेते"त्यादौ। अत्र वायुरेकमधिष्ठानं विश्वशब्दस्य समस्तवाचित्वाद्बहवो देवा अधिष्ठानम्। यद्यपि च शब्दस्यैव देवत्वान्नाऽत्रशब्दानां बहुत्वं। तथाऽपि देवत्वादिव्यवहारसिद्ध्यर्थं कल्प्यस्य स्वीकारस्याऽप्यर्थनिष्ठस्यैव कल्पनात् स्वीकारघटितमेधपतित्वस्याऽप्यर्थं त एवोपपत्तेरर्थ एवाऽत्राऽधिकरणे परम्परया देवतात्वाधिष्ठानपदेनोच्यत इति तद्बहुत्वोपपत्तिः। एवमादित्यानामपि बहूनामेवाऽधिष्ठानत्वं बहुवचनानुरोधात्। न च शब्दस्य देवतात्वपक्षे चतुर्थ्युपात्तदेवतात्वे प्रातिपदिकलक्ष्यस्याऽऽदित्यपदस्यैवाऽन्वयात् तस्य चैकत्वेन बहुवचनेनाऽप्येकत्वस्यैव लक्षणात् कथमधिष्ठानानेकत्वमिति वाच्यम् सत्यामपि लक्षणायां स्वशक्याश्रयवाचकपदवृत्तित्वसम्बन्धेनैव लक्षणादाश्रयरूपेऽर्थे बहुत्वोपपत्तेः। अतश्च तत्र देवताधिष्ठानसंख्यानुरोधेन द्विवचनान्तस्योहः। देवतात्वन्त्वेकम् अनेकत्वे प्रमाणाभावात्। आदित्येभ्य इत्यत्राऽपि न बहुत्वं विभक्त्युपात्तदेवतात्वान्वयि अपि तु बहुत्वस्याऽर्थिकमर्थसम्बन्धं गृहीत्वा तत्तल्लक्षितैकत्वमेवेति तत्राऽपि देवतात्वैकत्वम्। अस्तु वा बहुवचनबलात् तत्र देवतात्वभेद इति न

तदिहोदाहरणं किन्त्वग्रिमसूत्रएव। तदेतत् पूर्व्वाधिकरणस्य प्रयोजनमात्रकथनमिति मन्तव्यम् । ९ । ३ । १४ ।

॥ अर्थान्तरे ॥ यत्र तु देवतात्वान्यनेकानि अधिष्ठानं त्वेकमनेकं वा तत्रैकवचनान्तस्याऽप्यूहो यथा “त्वाष्ट्रं पात्नीवतं अग्नये पावकाय पशुमालभेत”। “आग्नेयः कृष्णग्रीवः सारस्वती मेषीवभ्रुः सौम्य” इत्यादौ। अत्र त्वष्टृपत्नीवतोरग्निपावकयोश्चाधिष्ठानैकत्वेऽपि तद्धित-चतुर्थीभेदाद्देवतात्वभेदः। तृतीयोदाहरणे तूभयभेदः। अतस्तत्र उभयोरपि मन्त्रयोस्तत्तत्संख्यावशेनोहः। न चाऽनयोर्मन्त्रयोरर्थ-द्वयपरत्ववशेनोहाङ्गीकारे प्रकृतौ विकृतौ वा देवतात्वतदधिष्ठान-रूपार्थभेदात् समुच्चयापत्तिरिति वाच्यम् उभयोरप्युभयार्थप्रति-पादकत्वेन विकल्पोपपत्तेः। एकवचनान्तो हि देवतात्वे परम्परा-सम्बन्धेन मेधपतित्वं वदन् परम्परासम्बन्धघटकतया अधिष्ठानमप्युप-स्थापयति। अग्नीषोमत्वादिना तदुपस्थितिस्तु मेधपतिपदादन्य-थैव। द्विवचनान्तोऽपि अधिष्ठाने मेधपतित्वं वदन्स्वीकाराख्यसम्ब-न्धस्य देवतात्वाधीनत्वाद्देवतात्वमप्युपस्थापयतीति सत्यऽपि विषयता-भेदे उभयोरप्युभयोपस्थापकत्वाद्विकल्पोपपत्तिः।

इति श्रीखण्डदेवविरचितायां भाट्टदीपिकायां
नवमस्य तृतीयपादः।

---

# भाट्टदीपिका।

## नवमाध्यायः।

### चतुर्थपादः।

॥ षड्विंशति ॥ तत्रैव प्रैषे "षड्विंशतिरस्य वङ्क्रयस्तानुष्वयोव्या-वयतादिति" श्रुतं तत्राऽस्य मन्त्रस्य करणमन्त्रत्वाभावेऽपि समवेत-प्रकाशकत्वसम्भवे असमवेतार्थत्वस्याऽन्याय्यत्वादविकार एव पशुगव इति तावदनाशङ्क्यं विकारोऽपि कीदृग्विध इति चिन्तायाम्—

प्रकृतिदृष्टपदान्यथात्वे प्रमाणाभावादश्रुतपदान्तरकल्पनानुपपत्ते-र्यावत् पशुगतसमस्तवङ्क्रिप्रकाशनार्थं षड्विंशतिरस्येति पदद्वयावृत्ति-रेव। अतएव प्राकृतपदबाधे प्रमाणाभावान्न क्वचिदपि एकवचनोहः। "अदितिःपाशं मेधपतये मेध"मित्यादावपि अभ्यासेनैव सर्व्वपाशादिप्र-काशनोपपत्तेः। अश्रुतद्विवचनाद्यध्याहारापेक्षया श्रुतस्यैवाऽभ्यासकल्पने लाघवाच्च। अन्यथा द्विधा त्रिधेत्येवमूहेनैव प्रकाशनोपपत्तौ एकधापद-स्याऽप्यभ्यासानापत्तेः। न च एकत्वादीनां प्रकृतावेकत्वादिनाऽनुद्दे-श्यत्वादपूर्व्वसाधनीभूतसंख्यात्वेन प्रकाशने च विकृतावपि पशुबहु-त्वादेरपूर्व्वसाधनीभूतस्य प्रकाशनार्थं बहुवचनादिप्रक्षेपावश्यम्भाव इति वाच्यम्। "आग्नेयं कृष्णग्रीवं सौम्यं वभ्रु"मित्यादौ पश्वेकत्वस्यैव तत्तदपूर्व्वसाधनत्वेन बहुत्वस्याऽविहितत्वात् प्राजापत्यानित्यादावपि यागबहुत्वार्थमेव बहुवचनोपादानेनाऽतिदेशप्राप्तस्य पश्वेकत्वस्यैव

तत्तदपूर्व्वसाधनत्वाच्च । अतश्च तत्प्रकाशनार्थमावृत्तिरेव श्रुतपदस्य युक्ता । न तु सूर्य्यादिपदवत् पदान्तरप्रक्षेपः । यत्तु मूले एतत्-पक्षसाधनार्थं षड्‌विंशतिसंख्या पशूभयसम्बन्धप्रधानमिदं वाक्यं प्रति-पशुभेदेन तत्सम्बन्धं प्रकाशयितुमभ्यसनीयमिति युक्तिरुपन्यस्ता । सा सम्बन्धस्य षष्ठ्यर्थस्य गुणत्वेन प्राधान्यशङ्कानुपपत्तेर्वाक्यार्थरूपस्य चाऽ-शाब्दत्वेन सुतरां तदनुपपत्तेः प्राधान्येऽपि च तस्य प्रतिपशूद्देशेनाऽपि प्रकाशनोपपत्तेरभ्यासे प्रमाणाभावादुपेक्षिता । अत उक्तयुक्त्यैव पद-द्वयाभ्यासः प्रसाध्य इति प्रथमः पक्षः ।

द्वितीयस्तु पशुगणे एकप्रयोगविधिपरिगृहीतानामनेकेषां साङ्गानां यागानां यौगपद्यावगतेरर्थप्रकाशनकार्य्यस्याऽपि यौग-पद्यावगमात् तदनुरोधेन युगपदनेकप्रकाशकप्रक्षेपस्याऽवश्यकत्वाच्च क्वचिच्छ्रूयमाणस्यैवाऽभ्यासः । "अदितिःपाश"मित्यादौ तु गुणानु-रोधेन प्रधानप्रातिपदिकस्याऽभ्यासे प्रमाणाभावादपि नाऽसौ अपि तु बहुवचनाद्यूह एव ।

यद्यपि च बहुत्वं न कस्यचिदङ्गं तथाऽपि पाशप्रातिपदिकेना-ऽनेकपाशोपादाने साधुत्वार्थं तत्प्रक्षेपस्यैवाऽवश्यकत्वात् । नचैक-वचनान्तपत्नीशब्दवत् प्रत्येकव्यक्त्यभिप्रायेणैकवचनप्रयोगः तस्य पाशैकत्वानेकत्वसन्देहजनकतया निर्णायकत्वाभावात् । प्रकृतिवद्भाव-बाधप्रसङ्गेनाऽप्रयोज्यत्वादतएव "द्विधानयोस्त्वचे"त्याद्यूहाङ्गीकारेऽपि एकैकत्वचि प्रयत्नद्वयसाध्यच्छेदनकत्वशङ्काजनकतया निर्णायकत्वा-भावादगत्या एकधापदेऽभ्यासाङ्गीकरणम् । प्रकृते तु विवक्षि-तार्थविषये संशयजनकत्वाभावाद्यौगपद्यसम्पत्तये ऊहाङ्गीकरणमेव

युक्तम्। तत्राऽपि षड्विंशतिपदिके अन्यथात्वे प्रमाणाभावात् षड्विंशती षड्विंशत इत्येवं वचनएवोहः। संख्याप्रधानत्वाच्चास्य वाक्यस्याऽयमर्थो निर्णीयते। तथाहि। सर्व्वत्र द्वौ त्रय इत्यादयः संख्याशब्दाः संख्येयप्रधाना एव विंशत्यादयस्तु संख्याप्रधानाः। दृष्टार्थता च तत्प्राधान्ये अन्यूनयोः पार्श्वयोरवद्यतीति वचनात् साकल्यावगमेन तत्प्रकाशनव्यञ्जत्वात् अतः प्रधानभूतषड्विंशति-प्रातिपदिकेनाऽन्यथाभावः। नचैवं विंशतिर्गवामितिवद्वंक्रीणां गुणत्वे वंक्रीशब्दस्य षष्ठ्यन्तत्वापत्तिः। संख्याप्राधान्येऽपि "देवदत्ता-दयःपर्षत्" "पञ्चपञ्चाशतस्त्रिवृतः संवत्सरा" इत्यादौ लक्षणया संख्येयशब्दस्य संख्यासामानाधिकरण्यदर्शनेन वंक्रिमल्लक्षणया वंक्रिशब्दस्याऽपि सामानाधिकरण्योपपत्तेः।

न च लक्षणाभियैव संख्येयवंक्रिप्राधन्यं विंशतिर्गाव इति वदिति वाच्यम् तथात्वेऽपि षड्विंशतिशब्दस्य संख्येयसामानाधिकरण्य-सम्पत्तये तल्लक्षणाङ्गीकारस्यावश्यकत्वात्। नामार्थयोः पार्ष्णिका-न्वयवेलायामपि अभेदेनैवान्वय इति नियमानङ्गीकारे तु ममाऽपि वंक्रीणां समवेतत्वसम्बन्धेन संख्यायामन्वयोपपत्तेर्न लक्षणा। न च वंक्रिशब्दस्य वंक्रिमल्लक्षणया संख्याविशेषणत्वे तस्या एकत्वेनैक-वचनापत्तिः बहुवचनस्य स्वशक्याश्रयसमवेतवृत्तित्वसम्बन्धेनैकत्व-लक्षणार्थत्वात्। तव मतेऽपि संख्येयप्राधान्ये षड्विंशतिरित्येक-वचनेन स्वशक्याश्रयसमवायिवृत्तित्वसम्बन्धेन बहुत्वलक्षणाया आव-श्यकत्वाच्च। नचैवं विनि मनाविरहः वंक्रिपदे जघन्यत्वस्यैव नियामकत्वात् अतश्च प्रधानभूतषड्विंशतिपदे अन्यथाभावा-

नुपपत्तेः । "षड्विंशती अनयो वंक्रय"इत्येवं वचनोह एवेति प्राप्ते ।

"ता अनुष्ठ्योच्चयावयता"दिति वंक्रीणामेव परामर्शात् तासामेव प्राधान्यं संख्या तु तद्विशेषणत्वेनोपात्ताऽपि साकल्यसूचिकेति नाऽदृष्टार्थतापत्तिः ।

एवञ्च षड्विंशतिपदगतैकवचनस्य बहुत्वलक्षणार्थत्वेनाऽसमवेतार्थत्वान्नैवोहसम्भावना । अपि तु षड्विंशतिप्रातिपदिक एव समवेतार्थत्वादूहः । अतश्च "द्विपञ्चाशदनयोर्वंक्रय" इति समस्य वचनमेव युक्तम् । किञ्च प्रकृतावप्येकैकस्मिन् पार्श्वे त्रयोदश त्रयोदश वंक्रयः समस्यैव षड्विंशतिपदेनोक्ता इति इहाऽपि समस्यैव सर्व्वाः प्रकाशयितव्या इति गम्यते । यद्यपि च न्यायसिद्धमपीदं समासवचनं एकधा षड्विंशतिरिति "द्विर्द्विर्बहुना"मित्याश्वलायनसूत्रमूलभूतश्रुत्या सुब्रह्मण्यानूहवदाभासोकर्त्तुमुचितम् । तथाऽपि "षड्विंशतिरिति समासेन वे"ति साङ्ख्यायनसूत्रमूलभूतश्रुत्या पक्षे समासस्याऽप्यभ्यनुज्ञानान्न विरोधः । अतएव पक्षेऽभ्यासेऽपि द्विवारमेव न तु यावत्पशु । एकधाशब्देपैवमिति द्रष्टव्यम् । वीप्सयैव यावत् पश्वेकप्रयत्नच्छेद्यत्वनिर्णयोपपत्तेः । ९ । ४ । १ ।

॥ अश्वस्य ॥ अश्वमेधे सवनीयपशुरश्वस्तूपरगोमृगौ चेतरौ विहितौ । तेषामेकप्रयोगत्वात् तन्त्रेणाऽध्रिगुप्रैषे पठनीये अश्वस्य चतुस्त्रिंशद्वंक्रिकत्वादितरयोः प्रत्येकं षड्विंशतिवंक्रिकत्वात् पूर्व्ववत् समस्य वचने षड़शीतिरेषां वंक्रय इति प्राप्तम् । तत्रायं मन्त्रः समाम्नातः । "चतुस्त्रिंशद्वाजिनो देवबन्धो र्वंक्रीरश्वस्य स्वधितिः समेति । अच्छिद्रा-

गात्रा वयुना कृणोत परुष्परुरनुघुष्या विशस्ते”ति। अयञ्च लिङ्गप्रकरणाभ्यां वंक्रिविशसनप्रैष एव विनियुज्यते न तु याज्यादौ अतश्चोपदेशिकेनाऽनेनाऽतिदेशप्राप्तस्याऽग्निगोरश्वविषये वंक्रिप्रकाशनमात्रांशे बाधादश्वस्याऽयं मन्त्रान्ययोऽस्तु छिपश्चाश्वदनयोर्वंक्रय इति समास इत्यपि प्राप्तम्।

तत्रेदमपरं वचनं “न चतुस्त्रिंशदिति ब्रूयात् षड्विंशतिरित्येव ब्रूया”दिति। तदनेन किं विधीयत इति चिन्तायां न तावदत्रप्रतिषेधविधिः। स हि चतुस्त्रिंशत्पदमात्रप्रतिषेधो वा स्यात्तादृक्प्रतिषेधो वा। उभयथाऽपि विहितप्रतिषेधे विकल्पापत्तेरसम्भवः। अन्त्ये ऋगन्तरत्वापत्तिश्च ऋक्प्रतिषेधे च षड्शीतिरित्येवं समासस्यैव प्राप्तेः षड्विंशतिपदयुक्ताऽग्निगुप्रैषस्याऽप्राप्तत्वेन तस्याऽपि विधाने वाक्यभेदापत्तेश्च षड्विंशतिपदेन षड्शीतिपदोपेताग्निगुप्रैषलक्षणया तस्याऽनुवादत्वे च लक्षणैव दोषः। अतो न गिरागिरेतिवत्र चतुस्त्रिंशदिति निषेधानुवादः। षड्विंशतिरिति च षड्विंशतिपदमात्रस्य पाठप्राप्ते मन्त्रे इरापदवद्विधानं। तद्वदेव च निषेधानुवादबलाच्चतुस्त्रिंशत्स्थानापन्नत्वं विधानबलाच्च मन्त्रान्तर्गतषड्विंशतिपदेनाऽश्ववंक्रिसंख्यालक्षणायामपि न दोषः।

नचैवकारेण विधिशक्तिप्रतिबन्धान्न षड्विंशतिरित्यस्य विधित्वमिति वाच्यम् एवकारस्य विधिशक्तिप्रतिबन्धकत्वे मानाभावात्। “अत्र ह्येवाऽवपन्तो”त्यादौ तद्युक्तेऽपि विधिदर्शनाच्च। नचैवकारेण स्वार्थ एव विधेयत्वापादनेन षड्विंशतिपदे विधेयत्वप्रतिबन्ध इति वाच्यम् षड्विंशतिपदस्यैव विधिमङ्गीकृत्यैवकारस्यैवाऽयोगव्यावृत्तिरूपं फल-

मादाय चतुस्त्रिंशत्पदव्यावृत्त्याऽन्ययोगव्यावृत्तिरूपं फलमादायैव वाऽनुवादत्वोपपत्तेः। अतश्चाश्वे "षड्विंशतिर्वाजिनो देवबन्धो"रिति मन्त्र इतरयोस्तु प्राकृत एव समासेनेति प्राप्ते।

न तावदत्रैवकारोऽयोगव्यावृत्त्यर्थकतयाऽन्ययोगव्यावृत्त्यर्थकतया वाऽनुवादो वैयर्थ्यापत्तेः, पदमात्रेण स्तुत्यनुपपत्तेश्च अन्ययोगव्यावृत्त्यनुवादस्य निषेधेनैव सिद्धौ पुनरनेन करणे सुतरां वैयर्थ्याच्च। नित्यवद्विधिवैवकारार्थविधौ चाऽयोगव्यावृत्तेस्तावत् षड्विंशतिपदस्य पक्षेऽप्यप्राप्तत्वादयोगस्याऽप्रसक्तत्वेन विधानासम्भवः। षड्विंशतिपदविधानावश्यकत्वे तत एव तस्याः प्राप्तत्वाच्च। अतएव नाऽन्यनिवृत्तेः तद्विधाने विकल्पस्याऽवश्यकत्वाच्च। अतएवा"ऽश्वस्यैवाऽवपन्तो"त्यादावेवकारार्थविधौ "न तौ पशौ करोती"ति तद्विकल्पापत्तिरित्युक्तं कौस्तुभे।

वस्तुतस्तु निषेधसमभिव्याहृतैवकारस्थले प्रतिप्रसवरूपता स्वविषयस्याऽनुवाद्यतैव वाऽनुभवसिद्धा। शब्दशक्तिवैचित्र्यस्याऽनुभवसिद्धस्याऽपह्नोतुमशक्यत्वात्। न च वैशेषिके मन्त्रे षड्विंशतिपदस्य प्रतिप्रसवः सम्भवति। न च प्राकृतएवाऽश्रिगौ षड्शीतिपदप्राप्तौ तस्य प्रतिप्रसवः तथात्वे "न चतुस्त्रिंश"दिति निषेधानुवादानुपपत्तेः। वैशेषिकमन्त्रेणाऽस्यांशे प्राकृताऽश्रिगुबाधेन तत्र षड्विंशतिपदप्रतिप्रसवानुपपत्तेश्च। तूपरगोमृगयोर्द्विपञ्चाशत्पदप्राप्तौ तत्र षड्विंशतिपदप्रतिप्रसवेऽपि निषेधानुवादानुपपत्तिस्तदवस्थैव।

आश्वलायनमताङ्गीकारे तु तत्र षड्विंशतिपदस्यैव सत्त्वात् प्रतिप्रसवानुपपत्तिः। अतएवकाररूपतातात्पर्यग्राहकानुरोधेन षड्-

विंशतिपदोपलक्षितषड्शीतिपदोपेताध्रिगुप्रैषलक्षणया तस्यैव प्रतिप्रसवः। सोऽपि न विधेयः। एवकारेणाऽनुवाद्यत्वावगमात्। तत्प्राप्तिश्चेत्थम्। "न चतुस्त्रिंश"दित्ययं वैशेषिकमन्त्रप्रतिषेधविधिः। चतुस्त्रिंशत्पदेन लक्षणया तदादिसर्व्वमन्त्राभिधानात्। पदमात्रप्रतिषेधे तत्र षड्विंशतिपदप्राप्त्यभावेन "षड्विंशतिरित्येव ब्रूया"दित्यस्याऽनुवादत्वानुपपत्तेः। अतोवैशेषिकमन्त्रप्रतिषेधएवाऽयं ततश्च "न तौ पशौ करोती"तिवद्विहितप्रतिषिद्धत्वाद्विकल्पः। अभावपक्षे च अतिदेशप्राप्तस्य षड्शीतिपदोपेतस्याऽध्रिगोरेव न्यायेन प्राप्तत्वात् षड्विंशतिरित्येवेत्यनुवादः।

आश्वलायनमते तु "षड्विंशतिःषड्विंशतिश्चतुस्त्रिंशदेषां वंक्रय" इत्येवमाकारकाऽध्रिगुप्रैषस्य षड्विंशतिपदेन लक्षणात्तस्यैवाऽयमनुवादः। एतेनैवकारयुक्तवाक्येनोक्तविधाऽध्रिगुप्रैषस्यैव प्रतिप्रसवविधिः। वाचनिकेन चाऽध्रिगुप्रैषेण पाठप्राप्तस्य वैशेषिकमन्त्रस्य बाधाच्च चतुस्त्रिंशदिति निषेधोनित्यानुवादः। वैशेषिकमन्त्रस्य वाचःस्तोमादौ विनियोगश्च वैयर्थ्यमपि। एवञ्च विकल्पोऽपि नाऽष्टदोषदुष्टोभविष्यति। एवकारस्याऽयोगव्यावृत्तेरन्ययोगव्यावृत्तेर्वाऽनुवादो भविष्यतीत्यपास्तम्। निषेधपूर्व्वकैवकारस्थले एवकारसम्बन्धस्याऽनुवाद्यत्वप्रतीतेः। तादृशस्थले यच्छब्दादिवदेवकारस्याऽपि स्वसम्बन्धिविधिप्रतिबन्धकत्वात्।

अतएव उपवासाःपतन्तीत्युक्ते उपवासानेव कुरु न तु प्रवासं गच्छेत्यत्र प्रवासनिवृत्तिरेव विधेया न तूपवास इत्यनुभवसिद्धम्। यत्र तु न निषेधपूर्व्वकता तत्राऽनुभवबलादेवकारसम्बन्धस्याऽपि विधाने न

का चित् क्षतिः। यथा "अवघ्नेवाऽग्नपत्नी"त्यादौ। प्रकृते तु एवकार-सम्बन्धिनोऽध्रिगुप्रैषस्याऽविधेयत्वान्न चतुस्त्रिंशदित्येव निषेधविधिः। शास्त्रप्राप्तस्य निषेधाच्च "न तौ पशौ करोती"तिवर्द्विकल्पः। षड्विंशतिरित्येवेत्ययं प्रकरणपक्षे न्यायप्राप्तानुवादःतत्प्रकरणप्रशंसया कारणस्यैव निन्दार्थवादः। एवञ्च वैशेषिकमन्त्रस्य प्रकरणमपि न बाधितं भवति। विकल्पस्तु बहुवचनात्पाशमन्त्रवन्न विरुध्यते।

नचैवमध्रिगुप्रैषस्य विधेयत्वेऽपि एवकारार्थस्यैव वैशेषिकमन्त्रा-स्यान्यनिवृत्तिरूपस्य विधेयत्वोपपत्ते"र्न चतुस्त्रिंशदि"त्यस्यैवाऽनुवादत्वं किं न स्यादिति वाच्यं एवमपि शास्त्रप्राप्तनिवृत्तेरविशेषेण विकल्प-स्याऽपरिहार्य्यत्वात्। अतएवा"वघ्नेवाऽवपत्नी"त्यादावप्राप्तपरि-संख्यैवाऽङ्गीकृता कौस्तुभे। तन्मतरत्नकारस्य तु तत्रैवकारार्थविधि-मङ्गीकुर्वतस्तत्र विकल्पापत्तिस्तद्वदेव चेह तदनापत्तिरित्ययं पर्य्यनु-योगोदुरुद्धरो न तु मम। न च तवाऽपि विनिगमनाविरहतादव-स्थ्यम् एवकारस्याऽयोगव्यावृत्त्यन्ययोगव्यावृत्तिरूपनानार्थकतया सन्दिग्धार्थकत्वेन निःसन्दिग्धार्थकनिषेधस्यैव विधित्वाङ्गीकारात्। अतःसिद्धोऽश्वमेधेऽप्यध्रिगावूहः।

अत्र च सूत्रव्याख्यानुरोधेन किञ्चिद्वैलक्षण्येन च भाष्यकारेणैका-धिकरणं वार्त्तिककारेण चाऽधिकरणद्वयमाश्रितं तत्प्रमेयमात्र-लिखनप्रवृत्तेन मयोपेक्षितम्। ८। ४। २।

॥ वनिष्टु ॥ अध्रिगुप्रैष एव "वनिष्टुमस्य माराविष्टोरूकं मन्य-माना" इति श्रुतं तत्रोरूकपदेन किं उलूकस्याऽभिधानं किंवा वपाया इति चिन्तायां वपायामुरूकशब्दप्रयोगाभावादन्यत्र वेदे लकारस्थाने

रकारदर्शनाल्लोकेऽपि च रोमाणि लोमानीत्यादौ रलघटितपदयोः समानवृत्तिकत्वदर्शनादुरूकपदेनोलूकाभिधानं ततश्चोलूकबुद्ध्यावनिष्ठुं माच्छिदतेति मन्त्रार्थः। ततश्च वपानैकत्वेनोरूकशब्दस्योह इति प्राप्ते।

न तावद्वनिष्ठोः सर्वथैव लवनं निषिध्यते। हृदयादिवत्तस्य हविष्ट्वेन लवनस्याऽवश्यकत्वात्। नाऽपि उलूकसादृश्यबुद्धि-र्लवनकाले निषिध्यते अदृष्टार्थत्वापत्तेः। अत उरूकशब्देनाऽवयव-योगेन वपाभिधानमेव वपोद्धरणकाले वपां मन्यमाना भ्रान्त्या वनिष्ठुं मा च्छिद्यतेत्यर्थः। वनिष्ठोर्वपायोगोत्तरकालं लवितव्यत्वात् अत-स्तस्य पूर्व्वलवनप्रतिषेधवचनं दृष्टार्थं भवति। अवयवयोगश्चोरु-शब्दोविस्तीर्णवाची दीर्घश्छान्दसः। कशशब्दो मेदोवाची नामैक-देशे नामग्रहणात् कशब्दोऽपि तद्वचन एव ततश्च पदद्वयमिदं समासो वा विस्तीर्णं मेदोवपाख्यञ्च तदर्थः। न च रूढ्या योगबाधः। रेफ-घटितस्य पदस्योलूकेऽपि रूढ्यभावात्। अतश्च वपानैकत्वे उरूणिका-णीति पदद्वयपक्षे उरूकाणीति समासपक्षे च ऊहः कार्य्यः। ८। ४। ३।

॥ प्रशसा ॥ तत्रैव प्रैषे "प्रशसावाहू" इति श्रुतं अत्र क्षणुतादिति अनुषज्यते। तत्र प्रशसेत्यनेन किं करणीभूतः शास उच्यते उत प्रशस्तत्वमिति चिन्तायां प्रशंसायामदृष्टार्थत्वापत्तेः प्रशसेति तृती-यान्तं अकारलोपेन ह्रस्वेन च शासवाचिशासशब्दस्यासिं वैशासमाव-पते इत्यादिलिङ्गादसिवचनः। ततश्चासिना खड्गेन बाहू छिन्द्य-तेति प्रैषार्थः। यद्यपि च स्वधितिरेव पशुप्रकरणे सामान्यतश्छेदने विहितस्तथाऽपि बाहुच्छेदने मान्त्रवर्णिकोविशेषविधिरनेन न विरु-ध्यते। अतश्चाऽश्वमेधे "शतं वाजताहरितच्छरवोसयो भवन्तो"ति

असिबहुत्वस्य विधानात् तदनुरोधेनोह इति प्राप्ते भाष्यकारादिभिरेवं समाहितं प्रत्यक्षविहितस्वधितिसत्त्वे मान्त्रवर्णिकशासविधिकल्पनायां गौरवात् प्रशसापदं प्रशस्तत्वपरमेवेति तत्तु स्वयमेव "दश-प्रयाजानिष्ट्वाशासमाहरे"ति वाक्यस्य लिखितत्वाच्छासस्याऽपि पशौ विहितत्वेनोपेक्षितम् ।

वस्तुतस्तु वौधायनादिसकलकल्पपर्य्यालोचनया शासपदस्य स्वधितावपि शक्त्यवगमाद्बाहुच्छेदनेऽपि स्वधितेरेव प्रसक्तेर्न मान्त्रवर्णिकद्रव्यान्तरकल्पना । यत्तु "असिं वैशासमाचक्षत" इति लिङ्गं तत् स्वधितेरेव असितुल्यत्वेन स्तुत्यर्थं असिशब्दस्य निर्घण्टौ स्वधितिपर्य्यायत्वेन पाठाद्वा शासशब्दस्य स्वधितिपर्य्यायत्वसूचनार्थं न विरुध्यते । अतश्च शासस्य बाहुच्छेदने करणत्वसत्त्वेऽपि प्रशसेतिपदेन न तदभिधानं तकारमात्रलोपस्य बाहुलकत्वे सम्भवति अकारलोपस्य छत्वस्य च बाहुलकत्वाङ्गीकारे प्रमाणाभावात् द्वितीयाद्विवचनान्तत्वाङ्गीकारेण बाहुसामानाधिकरण्ये सम्भवति वैयधिकरण्यस्याऽन्याय्यत्वाच्च । द्विवचनस्याऽकारादेशस्तु स्वतन्त्र सूत्रविहित इति न तस्य बाहुलकत्वं एवञ्च शनादीषणीत्यादिप्रायपाठोऽपि सङ्गच्छते । अतश्च प्रशसापदेन प्रशस्तत्वाभिधानात् तस्य चाऽविकलत्वसूचनार्थतयाऽदृष्टार्थत्वाद्बाहुविहृद्वावूहः । तत्राऽपि प्राकृतपदस्य बाहुद्वये छान्दसत्वाद्बाहुबहुत्वे द्विपाशकायां विकृतौ बहुवचनान्तपाशमन्त्रस्येवाऽप्रवृत्तेः स्वाधीने शब्दप्रयोगन्यायेन प्रशस्तान् बाहूनित्यूहः । पूर्व्वपक्षे च प्रशासैरिति द्रष्टव्यम् ।

इदञ्च महाभाष्यस्वारस्यात् कान्तधातोरिव सान्तधातोरपि तुल्य-

न्याय्यत्वात् क्विप्विचौ नस्त इत्यङ्गीकृत्य शासपदस्यैव शसेति छान्दसमित्यापाद्य प्रशंसार्थत्वमुक्तम् । यदा तु महावार्त्तिककारस्याबहुप्रयोगाच्च सान्तधातोः क्विप्विचावित्येतदापाद्यमानस्वरानुगुण्यं शंस्छस्तुहिंसायामित्यनुशिष्टस्य हि सार्थकस्य शस्धातोर्लुप्तक्विबन्तस्य तृतीयान्तरूपाश्रयणेऽपि छान्दसत्वकल्पनाहिंसासाधनस्वधितिकरणकत्वावगते याज्ञिकसम्मतः शासहस्त एवोह्योऽनुसन्धेयः । ९ । ४ । ४ ।

॥ श्येन ॥ तत्रैव प्रैषे "श्येनमस्य वक्षः कृणुया"दिति श्रुतम् । तत्र श्येनपदं इवशब्दानुषङ्गेण वक्षस उपमार्थमित्यविवादम् । इवशब्दार्थश्च सादृश्यमित्यपि । तच्च बहुतरधर्म्मैः सम्भवे कतिपयधर्म्मैरन्याय्यत्वादाकारविशेषेणैव । अतश्च वक्ष उद्धृत्य कर्त्तनादिना श्येनाकारतां सम्पाद्य यष्टव्यमिति पक्षौ विधिस्तु पशुवत् प्रकृतित्वेनेति प्राप्ते—

अवदानवाक्ये"ऽथवक्षस" इति श्रवणात् तस्यैव हविष्ट्वप्रतीतेर्न कर्त्तनादिना तन्नाशः शक्यः कल्पयितुं तेन सादृश्यसम्पत्तिरविकलोद्धरणादेव जायत इति अविकलोद्धरणं प्रकाशयितुमेव सादृश्यानुवादो दृष्टार्थत्वात् । इतरथा श्येनाकारताया मान्त्रवर्णिक्या विधाने गौरवमदृष्टार्थता वाऽपद्येत । एवं "शलादोषणीकश्यपे वांसौ कवषोरूस्रेकपर्णाष्ठीवन्तइत्यादि"ष्वपि द्रष्टव्यम् । शला शलाके कश्यपे च कच्छपाविव कवषा गतिसाधनाश्वादियानसदृशे स्रेकपर्णाकरवीरपर्णाकृती अष्ठीवन्तौ अस्थिसंयुक्तौ । अत्र च पूर्व्वपक्षे सिद्धान्ते च श्येनादीनामुपमानत्वस्याऽवश्यकत्वात् तत्रापि चेवशब्दाश्रवणेन सिंहो देवदत्त इतिवद्गौणत्वाभावात् सिंह इव ते वीरा इतिवद्वक्षोविहितो अनूहितश्येनपदेनैवोपमानसिद्धेरनूह एव श्येनादिपदानां न्याय-

सिद्ध: कल्पसूत्रकारसम्मतश्चेति यद्यपीदमधिकरणं नोहविचारोप-योगि तथाऽपि प्रासङ्गिकत्वान्न दोष:। ९। ४। ५।

॥ प्रासङ्गिके ॥ अग्निहोत्रे "अग्नये ज्योतिष्मते पुरोडाशमष्टाकपालं निर्वपेद्यस्याग्निरुद्धृतो हुतेऽग्निहोत्रे उद्वायेदि"ति श्रुतं तत्र किमिदं प्रायश्चित्तं दर्शाद्यर्थप्रणीतस्याऽग्नेरग्निहोत्रकाले उद्वाने भवति नेति चिन्तायां—

यच्छब्दसमभिव्याहृतेन लिङ्गा पदश्रुत्या निमित्तत्वमुद्वानस्य प्रतीयते। न च तदुद्वानमात्रस्य नाशापरपर्य्यायस्य सम्भवति यत्किञ्चिन्नाशस्य सर्व्वदासत्त्वेन कादाचित्कत्वव्याप्यनिमित्तत्वा-सम्भवात्। अतो हविरार्त्तिन्यायेन प्रतियोगितासम्बन्धेनाऽग्नि-विशेषणं। तत्राऽपि चाग्नेरवयवशोनाशस्य सर्व्वदा सत्त्वादग्नि-त्वावच्छिन्नजगतीतलवर्त्तिसर्व्वाग्निनाशस्य च कदाप्यसम्भवा-दवश्यं करिष्यमाणाग्निहोत्रप्रयोगोपयोग्यग्नित्वावच्छिन्नप्रतियोगि-ताकनाशस्यैव प्रकरणादिना निमित्तत्वावसायादुक्तप्रयोगोपयोग्य-वयविनाश एवेदं भवश्यद्वायमर्थोभेदनहोमादावपि वक्तव्य एव। प्रकृतप्रयोगोपयोगिकपालनाशस्यैव निमित्तत्वात् अतस्तद्वदेवेद-मारादुपकारकं अग्निहोत्राङ्गम्।

अस्तु वा नष्टस्याग्नेरुत्पादकाङ्क्षायां वैमृधन्यायेन पदान्तर-कल्पनयाऽस्याग्निहोत्रापेक्षितादृष्टरूपाग्न्युत्पादकत्वकल्पनया सन्नि-पत्योपकारकत्वमेव। भेदनहोमस्य दृष्टरूपकपालजनकत्वस्य बाधितत्वादारादुपकारकत्वमिति विशेष:। अतएवाऽग्न्युत्पादन-प्रयोजनाभावादग्निहोत्रे हुते एतत्प्रायश्चित्तवैयर्थ्यापत्ते: अहुतेऽग्नि-

होत्र इत्यनुवादः। भेदनहोमस्तु कपालकार्य्यं निष्पन्नेऽप्युद्वासनात् पूर्व्वं भवत्येवेति विशेषः। सर्व्वथा दर्शार्थं प्रणीतस्याऽप्यग्नेरग्निहोत्रोपयोगित्वान्निमित्तसंस्कार्य्ययोरुभयोरपि सत्त्वेन तदर्थं कर्त्तव्यैवेष्टिः। न च तथाऽपि दर्शादौ वैधममन्त्रकोद्धरणाभावादुद्धृताग्निनाशाभावेन निमित्ताभावः। उद्धृतत्वस्य हविरुभयत्ववदग्निविशेषणत्वेनाऽविवक्षितत्वादिति प्राप्ते।

नाऽत्रोद्धृतत्वं उद्देश्यविशेषणं करिष्यमाणप्रयोगोपयोगुद्धृतत्वावच्छिन्नप्रतियोगिताकविनाशस्यैव निमित्तत्वात् वैधस्यैव चोद्धरणस्य निमित्तकोटिप्रवेशाच्च नाऽतिप्रसङ्गः। उद्धृतस्याग्नेरेवेति अग्निपदं नित्यानुवादः। इतरथा अजस्रपदे उद्धृतत्वाभावादुद्धृत इत्यस्य पाक्षिकत्वेनानुवादत्वापत्तेः, गार्हपत्यादिनाशेऽपि ज्योतिष्मतीष्ट्यापत्तेश्च। अतश्च दर्शार्थं प्रणीतेनैवाऽग्निहोत्रानुष्ठानादुद्धरणस्य प्रसङ्गसिद्ध कार्य्यतया लोपे निमित्ताभावादेव न नैमित्तिकानुष्ठानं अपि तु अन्वाहिताग्निनाशप्रायश्चित्तमेव अत्र च पूर्व्वपक्षे उद्धृताग्न्यभावमात्रेणान्यथात्वाज्ञातोहप्रसक्तः सिद्धान्ते तदपवादात् सङ्गतिः। ८। ४। ६।

॥ धारणे ॥ "अनारभ्य धार्य्यो गतश्रिय आहवनीय" इति श्रुतं तत्र गतश्रीत्वं ग्रन्थान्तरे अन्यथा व्याख्यातमपि तन्त्ररत्ने प्राप्तश्रीत्वमिति व्याख्यातं। तदिह यदा तन्निमित्तके आहवनीयधारणे कृतेऽग्निहोत्रकाले स उद्वापेत्तदा तदुत्पत्त्यर्थं ज्योतिष्मतीष्टिः कर्त्तव्या न वेति चिन्तायां निमित्तसंस्कार्य्ययोः सत्त्वात् कर्त्तव्या। न च धारणे कृते तत्प्रयोगोपयोगुद्धरणाभावादकरणं अनुद्धृतस्य धारणायोगेन ततः-

# LIST OF BOOKS FOR SALE

## AT THE LIBRARY OF THE

# ASIATIC SOCIETY OF BENGAL.

**No. 1, PARK STREET, CALCUTTA.**

AND OBTAINABLE FROM

*The Society's Agents—*

MR. BERNARD QUARITCH, 11, *Grafton Street, New Bond Street, London, W.*,
AND MR. OTTO HARRASSOWITZ, BOOKSELLER, *Leipzig, Germany.*

---

*Complete copies of those works marked with an asterisk* cannot be supplied—some of the Fasciculi being out of stock.*

## BIBLIOTHECA INDICA.

### *Sanskrit Series.*

| | Rs. | A. |
|---|---|---|
| Advaitachintā Kaustubha, Fasc. 1-3 @ /10/ each ... ... | 1 | 14 |
| Aitarēya Brāhmana, Vol. I, Fasc. 1-5; Vol. II, Fasc. 1-5; Vol. III, Fasc. 1-5, Vol. IV., Fasc. 1-8 @ /10/ each ... ... ... | 14 | 6 |
| Aitareyalocana ... ... ... ... ... | 2 | 0 |
| Amarakosha, Fasc. I ... ... ... ... ... | 2 | 0 |
| *Anu Bhāshya, Fasc. 2-5 @ /10/ each ... ... ... | 2 | 8 |
| Anumana Didhiti Prasarini, Fasc. I, @ /10/ ... ... ... | 0 | 10 |
| Astasāhasrikā Prajnāpāramitā, Fasc. 1-6 @ /10/ each ... ... | 3 | 12 |
| Atmatattvaviveka, Fasc. I ... ... ... ... | 0 | 10 |
| Acavaidyaka, Fasc. 1-5 @ /10/ each ... ... ... ... | 3 | 2 |
| Avadāna Kalpalatā, (Sans. and Tibetan) Vol. I, Fasc. 1-9. Vol. II, Fasc. 1-9 @ 1/ each ... ... ... ... ... | 18 | 0 |
| Bālam Bhatti, Vol. I, Fasc. 1-2, Vol. II, Fasc. 1, @ /10/ each ... | 1 | 14 |
| Baudhāyana Srauta Sūtra, Fasc. 1-3; Vol. II. Fasc. 1-4 @ /10/ each ... | 4 | 6 |
| Bhātta Dīpikā, Vol. I, Fasc. 1-6; Vol. II, Fasc. I, @ /10/ each ... | 4 | 6 |
| Bauddhastotrasangraha ... ... ... ... ... | 2 | 0 |
| Brhaddevatā, Fasc. 1-4 @ /10/ each ... ... ... ... | 2 | 8 |
| Brhaddharma Purāna, Fasc. 1-6 @ /10/ each ... ... ... | 3 | 12 |
| Bodhicaryāvatāra of Cāntideva, Fasc. 1-5 @ /10, each ... | 3 | 2 |
| Cri Cantinatha Charita, Fasc. 1-3 ... ... ... ... | 1 | 14 |
| Catadūsanī, Fasc. 1-2 @ /10/ each ... ... ... ... | 1 | 4 |
| Catalogue of Sanskrit Books and MSS., Fasc. 1-4 @ 2/ each ... | 8 | 0 |
| *Catapatha Brāhmana, Vol. I, Fasc. 1-7; Vol. II, Fasc. 1-5, Vol. III, Fasc. 1-7; Vol. V, Fasc. 1-4 @ /10/ each ... ... | 14 | 6 |
| Ditto Vol. VI, Fasc. 1-3 @ 1/4/ each ... ... ... | 3 | 2 |
| Ditto Vol. VII, Fasc. 1-5 @ /10/ ... ... ... | 3 | 2 |
| Catasāhasrikā-prajnāpāramitā, Part I, Fasc. 1-16 @ /10/ each ... | 10 | 0 |
| *Caturvarga Chintamani, Vol. II, Fasc. 1-25; Vol. III, Part I, Fasc. 1-18, Part II, Fasc. 1-10; Vol. IV, Fasc. 1-6 @ /10/ each ... | 36 | 14 |
| Ditto Vol. IV, Fasc. 7-8, @ 1/4/ each ... ... | 2 | 8 |
| Ditto Vol. IV, Fasc. 9-10 @ /10/ ... ... | 1 | 4 |
| Clokavartika, (English), Fasc. 1-7 @ 1/4/ each ... ... ... | 8 | 2 |
| *Crauta Sūtra of Cānkhāyana, Vol. I, Fasc. 1-7; Vol, II, Fasc. 1-4; Vol. III, Fasc. 1-4; Vol. 4, Fasc. 1 @ /10/ each ... ... | 10 | 0 |
| Cri Bhāshyam, Fasc. 1-3 @ /10/ each ... ... ... | 1 | 14 |

| | Rs. | A. |
|---|---|---|
| Dāna Kriyā Kaumudī, Fasc. 1-2 @ /10/ each ... ... ... | 1 | 4 |
| Gadahara Paddhati Kālasāra, Vol. I, Fasc. 1-7 @ /10/ each ... | 4 | 6 |
| Ditto Acarasāra, Vol. II, Fasc. 1-4 ... ... ... | 3 | 2 |
| Gobhilīya Grhya Sūtra, Vol. I, @ /10/ each ... ... | 3 | 2 |
| Ditto Vol. II, Fasc. 1-2 @ 1/4/ each ... ... | 2 | 8 |
| Ditto (Appendix) Gobhila Parsista ... ... | 2 | 0 |
| Ditto Grihya Sangraha ... ... ... | 0 | 10 |
| Haralata ... ... ... ... ... ... | 1 | 14 |
| Karmapradiph, Fasc. 1 ... ... ... ... ... | 1 | 4 |
| Kāla Viveka, Fasc. 1–7 @ /10/ each ... ... ... ... | 4 | 6 |
| Kātantra, Fasc. 1-6 @ /12/ each ... ... ... ... | 4 | 8 |
| Kathā Sarit Sāgara, (English) Fasc. 1-14 @ 1/4/ each ... ... | 17 | 8 |
| Kurma Purana, Fasc. 1-9 @ /10/ each ... ... ... | 5 | 10 |
| Kiranavali, Fasc. 1, @ /10/ ... ... ... ... | 0 | 10 |
| Madana Pārijāta, Fasc. 1-11 @ /10/ each ... ... ... | 6 | 14 |
| Mahā-bhāsya-pradīpodyota, Vol. I, Fasc. 1-9; Vol. II, Fasc. 1-12; Vol. III, Fasc. 1-10 @ /10/ each ... ... ... | 19 | 6 |
| Ditto Vol. IV, Fasc. 1-2 @ 1/4 each ... ... ... | 2 | 8 |
| Manutīkā Sangraha, Fasc. 1-3 @ /10/ each ... ... ... | 1 | 14 |
| Mārkandeya Purāna, (English) Fasc. 1-9 @ 1/- each ... ... | 9 | 0 |
| *Mīmamsā Darcana, Fasc. 10-19 @ /10/ each ... ... ... | 6 | 4 |
| Mugdhahodha Vyakarana, Fasc. 1-2, @ /10/ each ... ... | 1 | 4 |
| Nirukta, (2nd edition) Vol. I, Fasc. 1, @ Rs. 1-4 ... ... | 1 | 4 |
| Nyāyavārtika, Fasc. 2-6 @ /10/ each ... ... ... | 3 | 2 |
| Nityācārapaddhati, Fasc. 1-7 @ /10/ each ... ... ... | 4 | 6 |
| Nityācārapradīpa, Vol. I, Fasc. 1-8, Vol. II, Fasc. 1-3 @ /10/ each Rs. | 6 | 14 |
| Nyāyabindutīkā, Fasc. 1 @ /10/ each ... ... ... | 0 | 10 |
| *Nyāya Kusumānjali Prakarana, Vol. II, Fasc. 1-4 @ /10/ each ... | 1 | 14 |
| Nyayasarah ... ... ... ... ... ... | 2 | 0 |
| Padumāwati, Fasc. 1-6 @ 2/ each ... ... ... ... | 12 | 0 |
| Prākrita-Paingalam, Fasc. 1-7 @ /10/ each ... ... ... | 4 | 6 |
| Prakrta Laksanam, Fasc. 1 @ /1/8 each ... ... ... | 1 | 8 |
| Parācara Smrti, Vol. I, Fasc. 1-8, Vol. II, Fasc. 1-6; Vol. III, Fasc. 1-6 @ /10/ each ... ... ... ... ... | 12 | 8 |
| Parācara, Institutes of (English) @ 1/- each ... ... ... | 1 | 0 |
| Pariksamukha Sutram ... ... ... ... .. | 1 | 0 |
| Prabandhacintāmani (English) Fasc. 1-3 @ 1/4/ each ... ... | 3 | 12 |
| Rasarnavam, Fasc. 1-3 ... ... ... ... ... | 3 | 12 |
| Ravisiddhanta Manjari, Fasc. 1 ... ... ... ... | 0 | 10 |
| Saddarsana-Samuccaya, Fasc. 1-2 @ /10/ each ... ... ... | 1 | 4 |
| Samaraicca Kaha, Fasc. 1-4, @ /10/ each ... ... ... | 2 | 8 |
| Sānkhya Sūtra Vrtti, Fasc. 1-4 @ /10/ each ... ... ... | 2 | 8 |
| Ditto (English) Fasc. 1-3 @ 1/- each ... ... | 3 | 0 |
| Six Buddhist Nyaya Tracts ... ... ... ... | 0 | 10 |
| Srāddha Kriyā Kaumudī, Fasc. 1-6 @ /10/ each ... ... | 3 | 12 |
| Sucruta Samhitā, (Eng.) Fasc. 1 @ 1/- each ... ... ... | 1 | 0 |
| Suddhi Kaumudī, Fasc. 1-4 @ /10/ each ... ... ... | 2 | 8 |
| Sundaranandam Kavyam ... ... ... ... | 1 | 0 |
| Suryya Suddhanta, Fasc. 1-2 @ 1-4 each ... ... ... | 2 | 8 |
| Syainika Sastra ... ... ... ... ... | 1 | 0 |
| *Taittreya Brahmana, Fasc. 11-25 @ /10/ each ... ... ... | 9 | 6 |
| *Taittlrīya Samhitā, Fasc. 27-45 @ /10/ each ... ... ... | 11 | 14 |
| *Tāudya Brāhmana, Fasc. 10-19 @ /10/ each ... ... ... | 6 | 4 |
| Tantr Vārtika (English) Fasc. 1-10 @ /1/4 ... ... ... | 12 | 8 |
| Tattva Cintāmani, Vol. I, Fasc. 1-9; Vol. II. Fasc. 1-10; Vol. III, Fasc. 1-2; Vol. IV, Fasc. 1; Vol. V. Fasc. 1-5; Part IV, Vol, II, Fasc. 1-12 @ /10/ each ... ... ... ... | 24 | 6 |
| Tattva Cintamani Didhiti Vivriti, Vol. I, Fasc. 1-4; Vol. II, Fasc. 1, @ /10/ each ... ... ... ... ... | 3 | 2 |
| Tattva Cintamani Didhiti Prakas, Easc. 1-4, @ /10/ each ... ... | 2 | 8 |

| | Rs. | A |
|---|---|---|
| Tattvârthâdhigama Sutram, Fasc. 1-3 @ /10/ | 1 | 14 |
| Tirthaeintamoni, Fasc. 1-3, @ /10/ each | 1 | 14 |
| Trikânda-Mandanam, Fasc, 1-5 @ /10/ | 1 | 14 |
| Tul'si Satsai, Fasc. 1-5 @ /10/ | 3 | 2 |
| *Upamita-bhava--prapafica-kathâ, Fasc. 1-2, 2-13 @ /10/ each | 6 | 14 |
| Uvasagadasâo, (Text and English) Fasc. 1-6 @ 1/- | 6 | 0 |
| Vallâla Carita, Fasc. I @ /10/ | 0 | 10 |
| Varsa Kriyâ Kaumudi, Fasc. 1-6 @ /10/ | 3 | 12 |
| *Vâyu Purâna. Vol. I, Fasc. 3-6; Vol. II. Fasc. 1-7; @ /10/ each | 6 | 14 |
| Vidhâna Pârijâta, Fasc. 1-8; Vol. II. Fasc. 1 @ /10/ | 5 | 10 |
| Ditto Vol. II. Fasc. 2-4, @ 1/4 | 3 | 12 |
| Vivâdaratnâkara, Fasc. 1-7 @ /10/ each | 4 | 6 |
| Vrhat Svayambhâ Purâna, Fasc. 1-6 @/ 10/ | 3 | 12 |
| Yogasâstra, Fasc. 1-3 | 3 | 12 |

*Tibetan Series.*

| | Rs. | A |
|---|---|---|
| Amarakosah | 2 | 0 |
| Bauddhastotrasangraha, Vol. I | 2 | 0 |
| A Lower Ladakhi version of Kesarsaga, Fasc. 1-4, @ 1/- each | 4 | 0 |
| Nyayabindu Dharmakirti, Fasc. 1 | 1 | 0 |
| Pag-Sam S'hi Tin, Fasc. 1-4 @ 1/- each | 4 | 0 |
| Rtogs *brjod dpag hkhri* S'iâ (Tib. & Sans. Avadâha Kalpalata) Vol. I, Fasc. 1-9; Vol. II. Fasc. 1-9 @ 1/- each | 18 | 0 |
| Shet-Phyin, Vol. I, Fasc. 1-5; Vol. II, Fasc. 1-3; Vol. III, Fasc. 1-6 @ 1/ each | 14 | 0 |

*Arabic and Persian Series.*

| | Rs. | A |
|---|---|---|
| Al-Muqaddasi (English) Vol. I, Fasc. 1-4 @ 1/- | 4 | 0 |
| Ain-i-Akbari, Fasc. 1-22 @ 1/8/ each | 33 | 0 |
| Ditto (English) Vol. I, Fasc. 1-7, Vol. II, Fasc. 1-5, Vol. III, Fasc. 1-5, Index to Vol. II, @ 2-each | 36 | 0 |
| Akbarnâmah, with Index, Fasc. 1-37 @ 1/8/ each | 35 | 8 |
| Akbarnâmah English Vol. I, Fasc. 1-8; Vol. II, Fasc. 1-7: Vol. III, Fasc. 1-2, @ 1/4/ each | 21 | 4 |
| Arabic Bibliography, by Dr. A Sprenger @ /10/ | 0 | 10 |
| Conquest of Syria, Fasc. 1-9 @ /10/ each | 5 | 10 |
| Catalogue of Arabic Books and Manuscripts 1-2 @ 1/- each | 2 | 0 |
| Catalogue of Persia Books and Manuscripis in the Library of the Asiatic Society of Bengal, Fasc. 1-3 @ 1/- each Rs. | 3 | |
| Dictionary of Arabic Technical Terms, and Appendix Fasc. 1-21 @ 1/8/ each | 31 | 8 |
| Faras Nama, Fasc. 2 | 1 | 0 |
| Farnang-i-Rashidi, Fasc. 1-14 @ 1/8/ each | 21 | 0 |
| Fihrist-i-Tusi, or Tusy's list of Shy'ah Books, Fasc. 1-4 @ 1/- each | 4 | 0 |
| Hadiqatu'L. Haqiqat, (Text & Eng.) | 3 | 8 |
| History of Gujarat | 1 | 0 |
| Haft Asman, History of the Persian Masnawi, Fasc. 1 @ /12/ each | 0 | 12 |
| History of the Caliphs, (English) Fasc. 1-6 @ 1/4/ each | 7 | 8 |
| Iqâlnamah-i-Jabângiri, Fasc. 1-8 @ /10/ each | 1 | 14 |
| Issbah, with Supplement, 51 Fasc. @ 1/- each | 51 | 0 |
| Ma'ssir-i-Rahimi, Part I, Fasc. 1-2 @ 2 each | 5 | 0 |
| Massir-ul-Umara, Vol. I, Fasc. 1-9; Vol II, Fasc. 1.9; Vol. III, 1.10; Index to Vol. I. Fasc. 10-11; Index to Vol. II. Fasc. 10-12; Index to Vol. III, Fasc. 11-12 @ /1/ each | 35 | 0 |
| Ditto (Eng.) Vol. I, Fasc. 1-2, @ 1/4/ each | 2 | 8 |

* The other Fasciculi of these works are out of stock, and complete copies .nnot be supplied

| | Rs. | A. |
|---|---|---|
| Marhamu 'L-Ilali 'L-Mu'Dila, Fasc. 1-2 ... ... ... | 2 | 0 |
| Muntakhabu-t-Tawarikh, Fasc. 1-15 @ 10/ each ... ... | 9 | 6 |
| Ditto (English), Vol. I, Fasc. 1-7; Vol. II, Fasc 1-5 and 8 Indexes; Vol. III, Fasc. 1 @ 1/- each ... | 16 | 0 |
| Muntakhabu-l-Lucāb, Fasc. 1-19 @ /10/ each ... ... ... | 11 | 14 |
| Ditto Part 3, Fasc. 1-2 @ 1/- each ... ... | 2 | 0 |
| Nukhbatu-l-Fikr, Fasc. 1 ... ... ... ... | 0 | 10 |
| Nizāmi's Khiradnāmah-i-Iskandari, Fasc. 1-2 @ /12 each ... ... | 1 | 8 |
| Persian and Turki Divans of Bayran Khan, Khan Khanan ... ... | 1 | 0 |
| Qawaninu 's-Sayyad of Khuda Yar Khan Abbasi, edited in the original Persian with English notes by Lieut-Col D. C. Phillott ... ... | 5 | 0 |
| Riyāzu-s-Salāqin, Fasc. 1-5 @/10/ each ... ... ... | 3 | 2 |
| Ditto (English) Fasc. 1-5 @ 1/- ... ... ... | 5 | 0 |
| Tadhkira-i-Khushnavisan ... ... ... ... ... | 1 | 0 |
| Tabaquāt-i--Nāsiri, (English), Fasc. 1-14 @ 1/- each ... ... | 14 | 0 |
| Ditto Index ... ... ... ... ... | 1 | 0 |
| Tārikh-i-Firuz Shāhi of Ziyāu-d-dim Barni Fasc. 1-7 @ /10/ each ... | 4 | 6 |
| Tārikh-i-Firuzshāhi, of Shams-i-Sirāi Aif, Fasc. 1-6 @ /10/ each ... | 3 | 12 |
| Ten Ancient Arabic Poems, Fasc. 1-2 @ 1/8/ each ... ... | 3 | 0 |
| The Mabani 'L Lughat : A Grammar of the Turki Language in Persian ... | 0 | 8 |
| Tuzuk-i-Jahāngiri, (Eng.) Fasc. @ 1/ ... ... ... | 1 | 0 |
| Wis-o-Rāmin, Fasc. 1 5 @ /10/ each ... ... ... | 3 | 2 |
| Zafarnāmah, Vol. I, Fasc. 1-9, Vol. II, Fasc. 1-8 @ /10/ each ... | 10 | 10 |

## ASIATIC SOCIETIES PUBLICATIONS.

1. ASIATIC RESEARCHES. Vols. XIX and XX @ 10/ each ... 20 0
2. PROCEEDINGS of the Asiatic Society from 1875 to 1904 @ /8/ per No.
3. JOURNAL of the Asiatic Society for 1875 (8), 1871 (7), 1872 (8), 1873 (8), 1874 (8) 1875 (7), 1876 (7) 1877 (8), 1878 (8), 1879 (7), 1880 (8, 1881 (7), 1882 (6), 1883 (5), 1884 (6), 1885 (6), 1886 (8), 1887 (7), 1888 (7), 1889 (10), 1890 (11), 1891 (7), 1892 (8), 1893 (11), 1894 (8), 1895 (7), 1896 (8', 1897 (8), 1898 (8), 1899 (8), 1900 (7), 1901 (7), 1902 (9), 1903 (8), 1904 (16), @ 1/8 per No. to Members and @ 2/- per No. to Non-Members.

*N. B.—The figures enclosed in brakets give the number of Nos. in each Volume.*

4. Journal and Proceedings. N. S., 1905, to date, (Nos. 1-4 of 9905 are out of stock), @ 1-8 per No. to Members and Rs. 2 per No. to Non-Members.
5. Memoirs, 1905, to date. Price varies from number to number. Discount of 25% to members.
6. Centenary Review of the Researches of the Society from 1784-1883 3 0
7. Catalogue of the Library of the Asiatic Society, Bengal, 1910 ... 8 0
8. Moore and Hewitson's Descriptions of New Indian Lepidoptera, Parts I-III, with 8 coloured Plates, 4 to. @ 6/ each ... 18 0
9. Kacmiracabdamrta, Parts I and II @ 1/8/ ... ... ... 3 0
10. Persian Translation of Haji Baba of Ispahan, by Haji Shaikh Ahmad-i-Kirmasi, and edited with notes by Major D.C. Phillott. ... 10 0

---

Notices of Sanskrit Manuscripts, Fasc. 1-35 @ 1/ each ... 35 0
Nepalese Buddhist Sanskrit Literature, by Dr. R. L. Mitra ... 5 0

*N. B.*—All Cheques, Money Orders, &c., must be made payable to the 'Treasurer, Asiatic Society," only, 31-10-11.

**Books are supplied by V. P, P.**